श्रीगणेशायनमः॥ ॥महोमहत्समाराध्यजलोत्सर्गमथोक्तवान्॥प्रतिष्ठांसर्वदेवानांनीलकंठेवदस्वमे॥१॥ ॥तत्रतत्काला
विष्णुधर्मोत्तरे॥ ॥चैत्रेवाफाल्गुनेवापिज्येष्ठेवामाधवेतथा॥माघेवासर्वदेवानांप्रतिष्ठाशुभदासिते॥रिक्तान्यतिथिषुस्यात्सावा·
रेभौमान्यकेतथेति॥ तत्रैव॥आषाढेद्वेतथामूलमुत्तरात्रयमेवच॥ ज्येष्ठाश्रवणरोहिण्यःपूर्वाभाद्रपदास्तथा॥हस्तोश्विनीरेवती
चपुष्योमृगशिरस्तथा॥अनूराधातथास्वातीप्रतिष्ठासुप्रशस्यतइति॥ अत्राषाढेद्वेइत्यनेनचोत्तराषाढाप्रोक्तासाचप्युत्तरात्रयपदा
मुत्तराफाल्गुन्युत्तराभाद्रपदयोरर्थवत्॥ नारसिंहे॥ तथामहाश्विनोमासउत्तमःसर्वकामदः॥देवीतत्रसदाशक्रपांसुनापिप्र
तिष्ठिता॥भवतफलदापुंसांकर्कस्थेचवृषस्थिते॥नतिथिर्नचनक्षत्रंनोपवासोत्रकारणम्॥ मातृभैरववाराहनारसिंहत्रि
विक्रमाः॥महिषघ्नस्रहस्त्यश्वस्थाप्यावेदक्षिणायने॥ क्वचिन्निषेधः॥ आर्द्रादिकेस्वातिगिरामकालेनक्षत्रदेदेशकेस्थितेर्के॥वि
वाहचौलव्रतबंधदीक्षासुरप्रतिष्ठादिनकार्यमेवेति॥ अथसंभाराः॥ अर्कादिग्रहसमिधाप्रत्येकमष्टशतंसंक्षेपपक्षे॥आज्य·
चर्वादिलोकपालादियागायपलाशादिसमिधाप्रत्येकमष्टसहस्रमष्टशतंवा॥ पुष्पमालाः॥कुंकुमं॥कर्पूरः॥कस्तूरी॥चंदनं॥
गुग्गुलुः॥धूपदहनपात्रं॥आरार्तिकं॥ घंटाः॥पादुका॥दर्पणं॥ बलिसामग्री॥ पायसभक्ष्यभोज्यनैवेद्यं॥ होमार्थमाज्यतिल·
यवाक्षतफलादिकं॥ प्रतिकुंडविष्टराश्चत्वारः॥प्रतिकुंडस्रुकस्रुवौ॥आसनानि॥त्रिसूत्री॥श्वेतोर्णासूत्रं॥ सर्वतोभद्रादिरच·
नायश्वेतरक्तपीतनीलकृष्णवर्णकाः॥स्नपनकलशाः॥ पल्लवाः॥कदलीस्तंभाः॥पताकादश॥ ध्वजाश्चदश॥ तेषांवेणुदं·

डाः॥ वज्रमौक्तिकवैडूर्यशंखस्फटिकपुष्परागेंद्रनीलमहानीलाइतिरत्नाष्टकम्॥ हरितालकमनःशिलाभ्रककृष्णांजनमाक्षि
ककासीसस्वर्णमाक्षिकेगैरिकाइति धात्वष्टकं॥ तिलयवमुद्गगोधूमनीवारश्यामाकसर्षपव्रीह्यइतिबीजाष्टकं॥ सुवर्णरजत-
ताम्रलोहत्रपुसीसरंगरीत्याख्यधात्वष्टकं॥ मधुपर्कपात्रंसौवर्णंताम्रंवाअर्घ्यपात्रं॥ शक्त्येकद्वित्रिमाषसुवर्णशलाकास्थाप
नीयकलशरत्नानि॥ षोडशद्वारकलशाः॥ अष्टौलोकपालकलशाः॥ वेदिकलशाश्चत्वारः॥ वास्तुमंडलकलशः॥ कुंडकल
शाःकुंडसंख्यया॥ निद्राकलशः॥ स्नपनकलशाः॥ पंचचत्वारिंशत्।४५॥ कलशासंख्ययाशरावाणि॥ धारासहस्रान्वितौ
कलशौ॥ गजाश्वस्थापनवल्मीकसंगमकूलद्वयवराहोत्खातराजद्वारमृदः॥ सुरामांसीवचाकुष्ठशैलेयहरिद्रादारुहरिद्राश
ठीचंपकमुस्ताइतिसर्वौषध्यः॥ पंचगव्यंपृथक्पृथक्॥ व्रीहियवतिलगोधूमनीवारश्यामाकमुद्गाइति सप्तधान्यानि शय्या
सोपस्करा॥ श्वेतवस्त्रं॥ चामरे॥ विचित्रवितानं॥ त्रयोदुकूलपट्टाः॥ ऋत्विग्वरणसामग्री॥ शिल्पिवस्त्रयुगभित्यादिसंभृतसं
भारोमूर्तिप्रतिष्ठादिनात्प्राक्सप्तमदिनेपंचमदिनेद्विदिनेसद्योवाप्रासादाग्रेमंडपंकृत्वातन्मध्येचतुरस्त्रांपंचहस्तांचतुर्हस्तांवा
हस्तोच्छ्रितांवेदींमंडपोत्तरेचतुर्द्वारंस्नपनमंडपंतत्रवेदिकात्रयंकृत्वाशिल्पिस्थानात्प्रासादप्रादक्षिण्येनदेवंतत्रानीयासनेनि-
धायाचांतःप्राणानायम्य॥ मासाद्युल्लिख्यास्यांमूर्तौलिंगेवादेवकलासान्निध्यार्थमायुःश्रीसर्वफलाप्त्यक्षयसुखकामईश्वरप्री-
तिकामोवाअमुकमूर्तेर्लिंगस्यवाप्रतिष्ठांकरिष्यइतिसंकल्प्यगणपतिपूजनंपुण्याहवाचनंकृत्वा॥ प्रतिष्ठायाअंगभूतंश्राद्धंसे-

नत्कृदुर्लभं॥ यजमानात्मनः शक्यंकरिष्येमातृपूजनमितिमंत्रमुक्त्वामातृपूजनंनांदीश्राद्धंचकृत्वाचार्यंवृत्वाद्वात्रिंशत्षोडशा॰
ष्टौचतुरोवाऋत्विजोष्टौचतुरोवाद्वारपालान्वृत्वातान्संपूजयेत्मधुपर्कादिना॥ सदस्यवरणमप्यत्रेतित्रिविक्रमादयः॥ ततोमंत्रमूर्ति
र्भवान्नाथसंसारोच्छेदकारक॥ देवःपूजार्होयथास्यात्कुरुधर्मोद्भतिंचनः॥ संसारभयभीतेनअयंयज्ञःसमाश्रितः॥ प्रारब्धस्त्व
त्प्रसादेननिर्विघ्नंमेभवत्विति आचार्यंप्रार्थ्यसतूर्यघोषंसपरिकरः संपूर्णकुंभोभद्रंकर्णेभिरितिमंत्रेणमहामंडपंप्रदक्षिणीकृत्यप॰
श्चिमद्वारेणप्रविशेत्॥ ॥तत्राचार्यः॥ ॥अपक्रामंतुभूतानिपिशाचाः सर्वतोदिशं॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे इ॰
त्युक्त्वातत्रसर्षपान्विकीर्य देवाआयांतु यातुधानाअपयांतुविष्णोदेवयजनंरक्षस्वेतिरक्षांकृत्वा वेदिकाग्नेयकोणेस्थूणायांवसु॰
दायैनमः॥ वसुदामावाहयामि॥इत्यालभ्यस्रुगंधपुष्पादिनार्चयेत्॥ ततःप्रादक्षिण्येन॥ भद्रायैनमः भद्रांआवाहयामि इति॰
द्वितीयां॥ अदित्यैनमःअदितींआवाहयामि॥ इतितृतीयां॥ नंदायैनमः नंदांआवाहयामि॥ इतिचतुर्थी॥ मंडपाग्नेयकोणे॥॰
भूत्यैनमःभूतिंआवाहयामि॥ इतिप्रथमां॥१॥ सरस्वत्यैनमःसरस्वतींआवाहयामि॥ २॥ पूर्वसंध्यायैनमःपूर्वसंध्यांआवा
हयामि॥ ३॥ मध्यसंध्यायैनमः मध्यसंध्यांआवाहयामि॥ ४॥ पश्चिमसंध्यायैनमः पश्चिमसंध्यांआवाहयामि॥५॥ गायत्र्यै
नमःगायत्रींआवाहयामि॥ ६॥ सावित्र्यैनमः सावित्रींआवाहयामि॥ ७॥ बृहस्पतयेनमः बृहस्पतिंआवाहयामि॥ ८॥ अदित्यै
नमःअदितींआवाहयामि॥ ९॥ विनतायैनमः विनतांआवाहयामि॥ १०॥ पौर्णमास्यैनमः पौर्णमासींआवाहयामि॥ ११॥ सिनीवा॰

स्यैनमः सिनीवालींआवाहयामि ।। १२ ।। इति षोडशस्थूणाः स्पृष्ट्वा पूजयेत् । नागमात्रेनमइतिबलिः कार्यः ।। सर्वेभ्योनमइतिशा-
खोद्भूधनानिपूजयेत् ।। ततः पश्चिमद्वारेणनिर्गत्यपूर्वदिगादिद्वारतोरणपूजामारभेत् ।। तत्रप्राच्यांस्फटिकतोरणायनमः ।। अश्व-
त्थतोरणेनयज्ञंरक्षसर्वविघ्नान्निवारयेतिपूजयेत् ।। अथत्रिशूलशृंगेषुप्रादक्षिण्येनेंद्रंधातारंभगमित्यादित्यन्यासंकुर्यात् ।। द्वा
रशाखयोर्ध्ववमध्वरंचेतिवस्त्रद्वयमर्चयेत् ।। शाखामूलयोर्धान्यराश्योरुपरिरत्नगर्भौप्रशांतशिशिरनामानौकलशौप्रतिष्ठा
प्यपूजयेत् ।। ततोद्वारदेशेइंद्रमावाह्यनमस्कृत्य इंद्रायाहि चित्रभानो इतिपीतांपताकांध्वजंचालभ्यत्रातारमिंद्रमितितोरणोप
रिनिदध्यात् ।। इंद्रायघृतोदनबलिदानं ।। अग्निमीळइत्यृग्वेदंपूजयेत् ।। ऋग्वेदः पद्मपत्राक्षोगायत्रः सोमदैवतः ।। अत्रिगोत्र-
स्त्वविभेंद्रऋत्विक्त्वंमेमखेभवेतिध्यानम् ।। तत्रश्रीसूक्तंपावमानंचसोमसूक्तंस्वमंगलं ।। पौरुषंरुद्रसूक्तंचवामदेव्यंतथैव-
चेतिद्वारपालजपः ।। अथाग्नेयकोणे ।। अग्नयेनमइत्यग्निमावाह्यपूजयेत् ।। अग्नआयाहीतिरक्तध्वजपताकालंभः ।। त्वन्नो
अग्नइतिपताकोच्छ्रयः ।। अग्निंदूतमितिघृतोदनबलिः ।। याम्येस्वभद्रद्वारतोरणायनमः ।। औदुंबरतोरणेन यज्ञंरक्षसर्ववि-
घ्नान्निवारयेतिपूजयेत् ।। शृंगेषुपूष्णेनमः ।। मित्रायनमः ।। वरुणायनमइत्यादित्यन्यासः ।। द्वारशाखयोः सोमायनमः ।। आ-
यायनमइतिवस्त्रद्वयमर्चयेत् ।। शाखामूलयोः पर्जन्याशोकनामानौकुंभौप्रतिष्ठाप्यपूजयेत् ।। ततोद्वारदेशेयममावाह्यन-
मस्कृत्ययमायसोममितिश्यामध्वजपताकालंभः ।। यमायमधुमत्तममितितोरणोपरिनिधानं ।। माषभक्तबलिदानइषेत्वे-

तिपजुर्वेदंपूजयेत्॥ कातराक्षोयजुर्वेदस्त्रैष्टुभोविष्णुदेवतः॥ काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेतियजुर्वेदध्यानम्॥
तत्र॥आनोभद्राजुवाकश्चआशुःशिशानकस्तथा॥ यद्देवात्रीणिचपठेत्ततोष्टौचचतुर्नंतुमां॥ अभिधाअसिसमेवदीर्घायुस्तेऋ-
चंपठेत्॥ आप्यायस्ववषट्॥ नमोअस्तुसर्पेभ्यः॥आकृष्णेन॥ नमःशंभवेइत्येकाएकान्निर्दिष्टतोक्रमात्॥ त्रातारमिंद्रमित्ये-
कांसोमंराजानमेकया॥ अन्नपतेमहांइंद्रःऋचंवाचंसमग्रकंपठेत्॥ अथनिर्ऋतौ॥ निर्ऋतयेनमइति निर्ऋतिमावाह्यपूज-
येत्॥ मोषुणःपरापरेतिपताकालंभः॥अस्कन्नमितिध्वजपताकोच्छ्रयणम्॥ निर्ऋतिंसंपूज्य॥ मोषुणइतिकृष्णत्रीह्यन्नं
घृतसहितंबलिंदद्यात्॥ अथपश्चिमायां॥ रूभीमतोरणायनमः॥ रक्षतोरणेनंयज्ञंरक्षसर्वविघ्नान्निवारयेतिपूजयेत्
अथत्रिशूलेषु॥अर्यम्णेनमः॥अंशवेनमः॥ विवस्वतेनमइत्यादित्यन्यासः॥ द्वारशाखयोःअनिलायनमः॥अनलायन-
मइतिवसुद्वयम्॥शाखामूलयोर्धान्यपुंजोपरि संजीवनामृतनामानौकुंभौप्रतिष्ठाप्यपूजयेत्॥ तत्रवरुणमावाह्यनमस्ते-
त्यतत्त्वायामीतिश्वेतध्वजपताकालंभः॥उदुत्तमंवरुणेतितोरणोपरिनिधानम्॥ नवनीतोदनबलिदानम्॥ अग्नआयाह्री
तिसामवेदंपूजयेत्॥ सामवेदस्तुपिंगाक्षोजागतःशक्रदैवतः॥ भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिसामवेद-
ध्यानं॥ तत्रजपः॥ इंद्रायसामगायत॥अहमस्मिप्रथमजा॥ सेतूंस्तर॥ स्वादिष्ठया॥ गायंतित्वागायत्रिणः॥कस्यनूनं
कतमस्यामृतानामित्यादि॥ अथवायव्ये॥ वायवेनमइतिवायुमावाह्यपूजयेत्॥ वायोयेतेतिधूम्रध्वजपताकालंभः॥

तववायवृतस्यतइतिपताकोच्छ्रयणम्॥ वायुंसंपूज्ययवौदनबलिदानम्॥ अथोत्तरे॥ स्कंभायतोरणायनमः॥शन्नोदेवी
तितोरणालंभः॥ न्यग्रोधतोरणेनयज्ञंरक्षसर्वविघ्नान्निवारयेतिपूजयेत्॥ शृंगेषुत्वष्ट्रेनमः॥सवित्रेनमः॥विष्णवेनमःइ
त्यादित्यन्यासः॥ द्वारशाखयोः॥ प्रत्यूषायनमः॥प्रभासायनमइतिवस्तुद्वयम्॥ शाखामूलयोर्धनदश्रीप्रदनामानौकुंभौ
प्रतिष्ठाप्यपूजयेत्॥ अत्रसोममावाह्यनमस्तुस्यसोमोधेनुमितिस्वर्णवर्णध्वजपताकालंभः॥ वयंसोमेतितोरणोपरि
निधानम्॥ प्रियंगवबलिदानं॥शन्नोदेवीरित्यथर्ववेदंपूजयेत्॥ स्वर्णनयनोथर्वानुष्टुपछंदःपुरंदरः॥ वेदोवैतानगो
त्रस्तुकौत्विकुत्वंमेमरवेभवेतितत्ध्यानम्॥ अथर्वांगिरसंचैवअथर्वशिरसंतथा॥ शांत्यध्यायंचपठेत्॥ अथेशान्येईशा
नायनमइतीशानमावाह्यपूजयेत्॥ नमःशंभवेइतिरक्तध्वजपताकालंभः॥ तमीशानमित्युच्छ्रयः॥ गावेधुकबलिः॥ ॥
ईशानपूर्वयोर्मध्ये॥अनंतायनमइत्यनंतमावाह्यपूजयेत्॥ नमोअस्तुसर्पेभ्यइतिमेघवर्णध्वजपताकालंभः॥ तद्वि-
ष्णोरित्युच्छ्रयः॥विष्णोर्नुकमितिबलिदानम्॥ पश्चिमनिर्ऋतिमध्ये॥ ब्रह्मणेनमइत्यावाह्यपूजयेत्॥ यद्देवादेवहेडन
मितिरक्तध्वजपताकालंभः॥ ब्रह्मजज्ञानमितिउच्छ्रयः॥ सनोभुवनस्यपतिःइतिपायसबलिदानम्॥ प्राच्यागणानांत्वे
तिगणेशंसंपूज्य॥नमोस्तुरुद्रेभ्योयेअंतरिक्षेइति॥ मंडपाद्बहिर्दिग्विदिक्षुरुद्रान्संस्थाप्यतेभ्योबलिंदत्वायेकेचित्विह
लोकेषुआगताबलिकांक्षिणः॥तेभ्योबलिंप्रयच्छामिनमस्तुस्यपुनःपुनरितीशान्यांसर्वेभ्योनमइतिबलिंदत्वाचामेत्॥

॥ इति मंडपपूजा ॥ ॥ अथ गुरुर्महावेद्यां सर्वतोभद्रदेवताः सामान्यप्रयोगोक्त्या आवाह्य संपूज्य स्वकुंडेऽग्निं स्थापयेत् ॥ त-
तः सर्वेऽपि होतारस्तमेवाग्निं स्वस्वकुंडे प्रणयेयुः ॥ ततो गुरुः प्रासादांतरीशान्यां नैर्ऋत्यां वा हस्तमितवेद्यां चतुःषष्टिपदे वास्तु-
पीठे सामान्यप्रयोगोक्त्या शिख्यादिदेवता आवाह्य संपूज्य ताभ्यो बलिं दद्यात् ॥ कुंडेषु स्वस्वशाखीयपूर्वांगोत्तरं होतारः प्रति-
देवतमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिमष्टौ वा प्रत्येकं समित्तिलाज्यैः कुंडसंख्यया विभज्य जुहुयुर्नाममंत्रैः ॥ ततः
पंचसंख्यया पंचविंशतिसंख्यया वा बिल्वैस्तद्बीजैर्वा वास्तोष्पत इति चतसृभिः वास्तोष्पते ध्रुवा स्थूणामिति चतुर्हुत्वा अघो-
रेभ्योऽथ घोरेभ्य इत्याज्येनाष्टोत्तरसहस्रमष्टोत्तरशतं वा वास्तुमर्मसु धाना यजुहुयुः ॥ ततो रक्षोघ्नपावमानसूक्ताभ्यां त्रिसू-
त्र्या प्रासादं वेष्ट्य परितो जलदुग्धयोः पृथगविच्छिन्नधारे दत्त्वा पीठे पूजितां हैमीं वास्तुप्रतिमां दधिदूर्वासप्तधान्यशैवालगं-
धाक्षतपुष्पयुते पक्वमृद्भांडे संस्थाप्य तत्पिधाय चतुःषष्टिधा भाजितप्रासादाग्नेयकोणे कोणपदादुत्तरे आकाशपदे जानुमा-
त्रं गर्तं कृत्वा जलेनापूर्य गंधपुष्पाणि प्रक्षिप्य मृद्भांडं तत्र निधाय गर्तं तथैव मृदा पूरयेत् ॥ मृदआधिक्ये शुभं ॥ इत्थं वास्तुपूजां कृ-
त्वा गुरुर्मंडपेशानभागे वेद्यां ग्रहानधिदेवताः प्रत्यधिदेवता विनायकादीन् पंच लोकपालांश्चावाह्य संपूजयेत् ॥ ततो ऋत्वि-
जः समिच्चर्वाज्यैरष्टोत्तरसहस्रमष्टोत्तरशताष्टाविंशत्यष्टान्यतमसंख्यया कुंडेषु विभज्य हुत्वा बलीन्दत्वा पूर्णाहुतिं जुहुयुः
एतन्मंत्रप्रकारादिकं सामान्यप्रयोगे उक्तम् ॥ अथ गुरुः स्नानमंडपे ॥ ॐ नमो नारायणायेत्यभिमंत्रितपंचगव्येन भूमिं वे-

दिकात्रयं च संप्रोक्ष्य॥ तत्र दक्षिणवेदिकायामास्तृतवालुकायामक्षतैः स्वस्तिकं कृत्वा तत्र च भद्रपीठं निधाय वेदिकायाः पश्चा-
द्धारिपूर्णान्सपल्लवान्षट्कलशान् मृत्सल्लववृक्षीयकषायगोमूत्रगोमयभस्मगंधोदकैः प्रपूर्य उदक्संस्थपंक्तिरूपेणा-
च्छादयेत्॥ तत्रास्य स्थपतिकलशः भद्रपीठयुतमध्यवेदिकापश्चिमे एवं स्थपतिकलशातिरिक्ताः एकादश भद्रपीठोत्तर
वेद्यास्तु परितोऽष्टौ कलशान् पूर्वादिक्रमेण क्षारोदक क्षीरदधि सर्पिः सुरा इक्षुरस दूर्वोदक दर्भोदकयुतान् हिरण्यग-
र्भाद्यैरष्टभिर्मंत्रैर्विन्यसेत्॥ ततोऽन्येच वेद्याः पश्चिमभागे मृत्तिका गोमूत्र गोमय भस्म मिलितपंचगव्य क्षीरदधिघृत श
र्कराद्युत दशकलशाः॥ चतुर्दश शंखजल कलशाः अथान्यत्पंचत्रिंशत्कलशानासादयेत्॥ तत्र पंचसु पृथक् पंचामृतानि
पंचसु जलं पंचसु पल्लवकषायः दशसु क्रमात् पुष्पैः फलैः सौवर्णजलेन गोशृंगोदकेन धान्यैः सहस्रच्छिद्रैः सर्वौषधि-
भिः॥ पंचपल्लवैः दूर्वाभिर्नवयुताः कार्याः अवशिष्टेषु दशसु शंखजलमापूर्य लोकपालानावाह्य सर्वेष्वाकलशेष्वित्यनेन-
स्थाप्याः॥ सूक्ष्मवस्त्रं सुगंधतैलं यवचूर्णमुद्वर्तनार्थमामलकीचूर्णं सुगंधं जटामांसिं चासादयेत्॥ तदंते तीर्थोदककल
शे सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः॥ आयांतु यजमानस्य दुरितक्षयकारकाः॥ इत्यादितीर्थान्यावाहयेत्॥ ततः स
यजमान आचार्यो मूर्तिस्थपतिभ्यां सह सुमंगलघोषैः कर्मकुटीं गत्वा भूमावुपलिप्य विधिवदग्निं स्थापयित्वा प्रतिमानिर्मा
णे प्राणिवधादिदोषनिरासार्थं घृतेन तिलैर्वा होमं करिष्ये इति संकल्प्याज्यभागान्तं कृत्वा देवमन्त्रेणाज्याहुतिशतद्वयं हुत्वा

पूर्णाहुतिंहुत्वा प्रतिमांकुशैः संमार्ज्य मधुघृताभ्यंगेनदेवस्यव्रणभंगंकृत्वा पंचगव्येनपृथक् पृथक् स्नापयित्वा पुनः संपूज्य-
शंखवादेनरथादिनादेवंमहामंडपप्रादक्षिण्येनस्नानमंडपमानयेत्॥ तत्रगुरुर्दक्षिणवेद्यांभद्रकर्णोभिरिति प्राङ्मुखंदेवंभ
द्रासनेनिवेश्य पूर्वकल्पितषट्कलशेषुसर्वत्यंहिरण्यादिसहितंकलशंदेवसमीपेनिधाय काशीकुशस्थलीमायावंत्ययोध्या·
मथोःपुरी॥शालिग्रामंसगोकर्णंनर्मदाचसरस्वती॥तीर्थान्येतानिकुंभेस्मिन्विशंतुब्रह्मशासनात्॥ झषारूढासरोजाक्षी
पद्महस्ताशशिप्रभा॥ आगच्छतुसरिज्ज्येष्ठा गंगापापप्रणाशिनी॥नीलोत्पलदलश्यामापद्महस्ताबुजेक्षणा॥आयातुय-
मुनादेवीकूर्मयानस्थितासदा॥प्राचीसरस्वतीपुण्यापयोष्णीगोतमीतथा॥ऊर्मिलाचंद्रभागाचसरयूगंडकीतथा॥जंबुका
चशतद्रुश्चकुलिकासप्रभातथा॥वितस्ताचविपाशाचशर्मदाचपुनःपुनः॥ गोदावरीमहावर्ताशर्करावर्तमार्जनी॥ कावे
रीकौशिकीचैवतृतीयाचमहानदी॥विटंकाप्रतिकूलाचसोमनंदाचविश्रुता॥ करतोयावेत्रवतीदेविकावेणुकाचया॥
आत्रेयगंगावैतरणीकाश्मिरीन्हादिनीचया॥ प्लाविनीचशबत्रासाकल्माषाशंसिनीतथा॥ वसिष्ठाचअपापाचसिंधु-
वत्यारुणीतथा॥ताम्राचैवत्रिसंध्याचतथामंदाकिनीपरा॥ तैलकाद्रीचपाराचदुंदुभिर्नाकुलीतथा॥ नीलगंधाचबोधाच
पूर्णचंद्राशशिप्रभा॥अमरेशंप्रभासंचनेमिषंपुष्करंतथा॥आषाढीडिंडिभारत्नंभारभूतंबलाकुलम्॥ हरिश्चंद्रंपरंगुह्यं
मध्यंमध्यमकेश्वरं॥श्रीपर्वतंसमाख्यातंजलेश्वरमतःपरं॥आम्रातकेश्वरंचैवमहाकालंतथैवच॥केदारमुत्तमंगुह्यं·

महाभैरवमेवच॥ गयाचैवकुरुक्षेत्रंगुह्यंकनरवलंतथा॥ विमलंचंद्रहासंचमाहेंद्रंभीममष्टमं॥ वस्त्रापदंरुद्रकोटिंअविमु-
क्तंमहालयम्॥ गोकर्णभद्रकर्णंचहेमासंस्थानमष्टमम्॥ छागलाण्डंद्विरंडंचककोठिमंडलेश्वरम्॥ कालंजरवनंचैवदेव-
दारुवनंतथा॥ शंकुकर्णंतथैवेहस्थलेश्वरमतःपरम्॥ एतानष्टौचतीर्थानिगुह्यक्षेत्राणिसर्वशः॥ तानिसर्वाणिकुंभेस्मि-
न्विशंतुब्रह्मशासनादिति॥ मंत्रेणतीर्थानितत्रावाह्य॥ देवंस्नापयेत्॥ यजमानश्चशिल्पिवर्गंयथाशक्तिपूजयेत्॥ ततो
गुरुर्बहिर्निर्गत्यसिद्धार्थघृतपायसेस्त्र्यंबकमितिमागादिदिक्षुबलिंदत्वाचम्यदेवसमीपमागत्य त्रातारमिंद्रमित्यादिद-
शलोकपालमंत्रैर्मंडपांतर्दिक्षुरक्षांकृत्वा देवस्याग्रेचतुरोब्राह्मणानुपवेश्यस्वस्तिवाचयेत्तेभ्यश्चदक्षिणांदत्वादेवंस्नापयेत्॥
अग्निर्मूर्धेतिमृदा यज्ञायज्ञावइतिकषायैः गायत्र्यागोमूत्रेण गंधद्वारामितिगोमयेन मानस्तोकइतिभस्मना तत्सवितुरि-
तिगंधतोयेन॥ ततःपंचकलशेनपंचदेवत्यैः नमःशंभवेतिप्रथमेन॥ हंसःशुचिषदितिद्वितीयेन॥ यातेरुद्रेतितृतीयेन॥
विष्णोरराटेतिचतुर्थेन॥ ब्रह्मजज्ञानमितिपंचमेन॥ संस्नाप्य॥ शतंजीवेतिदूर्वाक्षतपुष्पैःसंपूज्य॥ वस्त्रेणाच्छाद्यद्वितीयवे-
द्यांभद्रंकर्णेभिरितिमंत्रेणभद्रासनेनिधाय॥ स्तीर्णबर्हिरितिप्रागग्रान्कुशानास्तीर्य॥ तत्रप्रणवेनदेवंनिधायप्राङ्मुखउद-
ङ्मुखोवाभूत्वा॥ कुंकुमाक्तेनसूत्रेणलिंगमावेष्ट्य प्रतिमायासुरवंलिंगस्यचनेत्राणिस्वर्णशलाकयाचित्रंदेवानामित्यर्धर्चे-
नेकल्पयेत्॥ ऊर्ध्वाधःपृथग्भूतंपद्मपुटद्वयंचाकृष्णेनेतिकल्पयेत्॥ नेत्रमध्येत्रिभागेनकनीनिकामितिकल्पयेत्॥

तदानकश्चित्पुरतस्तिष्ठेत्॥ स्वर्णपायसंभक्ष्यभोज्यमादर्शंचशीघ्रंदर्शयेत्॥ ततःशिल्पीलोहेनोल्लिखेत्॥ गुरुर्मधुसर्पि-
र्भ्यामभ्यज्येमंमेगंगेइति मंत्रेणाभ्यज्यपुनर्मृज्जोमयाभ्यांस्नापयेत्॥ यजमानःस्वर्णशलाकांस्नानवस्त्रादिकंचशिल्पि
नेदत्वा सहिरण्यांगांगुरवेदद्यात्॥ गुरुरुत्तरस्यांवेद्यांभद्रासनेदेवंस्थापयित्वा॥ कलशेनसमुद्रज्येष्ठाइतिसंस्नाप्य
संपूज्य दूर्वाक्षतान्मूर्ध्निदत्वा प्रार्थयेत्॥ नमस्तेचैस्करेश॥ निर्मकृतेविश्वकर्मणः प्रभावितशेषजगद्धात्रि तुभ्यंनमोन
मः॥ त्वयिसंपूजयामीशनारायणमनामयं॥ हरिताशेषदोषेश्च ऋद्धियुक्तासदाभवेति॥ ततोदेवस्यदक्षिणहस्तेप्र
तिमावितस्तिमात्रमूर्णासूत्रं कानिकदादितिमंत्रेणबध्नीयात्॥ सर्वसत्वमयंशांतंपरंब्रह्मसनातनम्॥ त्वामेवालंकरिष्या
मित्वंवंद्योभवतेनमः इतिपठित्वा चतुर्भिःकलशैःस्नपयेत्॥ इदमापइत्याद्येन॥ आपोदेवीरितिद्वितीयेन॥ इमंमे
गंगेइति तृतीयेन॥ तत्वायामीतिचतुर्थेन॥ ततोग्निर्मूर्धेत्यष्टपलमृत्तिकाकलशेनवरुणस्योत्तंभनमसीतिशुद्धोद
केन॥ तत्सवितुरितिद्वादशपलगोमूत्रकलशेन॥ आपोहिष्ठेतिशुद्धोदकेन॥ प्रसद्येतिमुष्टिसंमितभस्मकलशोदकेन॥ यो
वइतिशुद्धोदकेन॥ पयःपृथिव्यामितित्रिपलसंमितपंचगव्यकलशोदकेन॥ देवीरापइतिशुद्धोदकेन॥ आप्यायस्वेतिषो
डशपलक्षीरकुंभेन॥ तस्माअरंगमामवइतिशुद्धोदकेन॥ दधिक्राव्णइतिपंचविंशतिपलदधिकुंभेन॥ युंजानइतिउदकेन॥
घृतवतीतिसप्तपलघृतकुंभेन॥ देवस्यत्वेतिजलेन॥ मधुवाताइतित्रिपलमधुकुंभेन॥ आपोअस्मानितिजलेन॥ आयंगो-

रितित्रिपलशर्कराकुंभेन॥आपोहयद्बृहतीइत्युदकेनप्रक्षाल्य॥यज्ञायज्ञावइतिवस्त्रेणसंमार्ज्य॥स्रुगंधतैलेनाभ्यज्य॥द्रुपदादिवे
तियवशालिगोधूममसूरबिल्वचूर्णैरुद्वर्त्य॥यातेरुद्रशिवातनूरितियक्षकर्दमेनानुलिंपेत्॥ यक्षकर्दमस्तु॥ कस्तूरिकायाद्वौ
भागौद्वौभागौकुंकुमस्यचंदनस्यत्रयोभागाः॥शशिनस्त्वेकएवहीत्युक्तः॥ततोजटामांस्यानुलिप्य॥मानस्तोकेप्रतद्विष्णुरि
तिकलशद्वयेनस्नापयित्वा॥अपामसोममितिपंचामृतेन॥अयंराजावरुणोनुमन्यतांविशेषयथासंक्षेपयामि॥आप्यायस्वेति
तमसोमविश्वाभिरूतिभिः॥अप्स्वग्नेसधिष्टवइतिपंचभिः क्षालयेत्॥गंधद्वारामितिगंधोदकेन॥ यज्ञायज्ञावइतिपंचपल्लव-
कषायकलशेन॥ याओषधीरितिओषधिकलशेन॥ओषधीरितिसितपुष्पकलशेन॥शांताप्रथिवीतिशांत्युदककलशेन॥याः
फलिनीरित्यष्टफलकलशेन॥हिरण्यगर्भइतिस्रुवर्णकलशोदकेन॥ हविष्मतीरितिशृंगोदकेन॥ धान्यमसीतिधान्योदकेन॥
सहस्राक्षमितिसहस्रधाराकलशोदकेन॥यादिव्याइतिसर्वौषधिजलेन॥ नमोस्तुसर्पेभ्यइतिपंचपल्लवोदकेन॥ अष्टोव्यख्य
त्ककुभइतिरत्नोदकेन॥ इमंमेगंगेइतितीर्थोदकेन॥पुनरष्टाभिः कलशैः पूर्वकल्पितैः ससमुद्रसंज्ञितैः स्नपयेत्॥ कयानश्चित्रमि
तिक्षारोदकेन॥आप्यायस्वेतिक्षीरकुंभेन॥ दधिक्राव्णइतिदधिकुंभेन॥ घृतंवतीतिघृतकुंभेन॥पयः पृथिव्यामितिइक्षुरस-
कुंभेन॥ देवंबर्हिरितिस्रुरोदककुंभेन॥ स्वादिष्टयेतिस्वादूदकेन॥सरस्वतीयोन्यामितिगर्भोदकस्यपुनर्दशभिर्लोकपालक-
लशैः स्नापयेत्॥ तत्रातारमितिकदंबपल्लवकुंभोदकेन॥ त्वन्नो अग्नेइतिशाल्मलिपल्लवेन॥ स्रुगन्नः पंथेतिजंबूपल्लवेन॥

अस्मन्वंतमितिअशोकपल्लवेन॥ तत्त्वायामीतिप्लक्षपल्लवेन॥ स्मगंन्नः पंथेतिजंबूपल्लवेन॥ अस्मन्वंनमितिअशोकपल्लवेन॥
तत्त्वायामीतिप्लक्षपल्लवेन॥ वायोयेतइतिचूतपल्लवेन॥ वयंसोमेतिवटपल्लवेन॥ तमीशानमितिबिल्वपल्लवेन॥ नमोस्तुसर्पे
भ्यइतिनागपल्लवेन॥ ब्रह्मजज्ञानमितिपलाशपल्लवेन॥ ततः स्मंगलघोषैश्चतुर्भिः कुंभैरेकेनवाकुंभोदकेनदेवंस्नापयित्वा
स्मगंधिनासितवस्त्रेणपरिमृज्यविश्वतश्चक्षुरितिसंकलीकृत्यदेवमावाहयेत्॥ एह्येहिभगवन्विष्णोलोकानुग्रहकाम्यया
यज्ञभागंगृहाणेमंवासुदेवनमोस्तुते॥ हिरण्यवर्णेतिपाद्यमर्घ्यं॥ विभ्राडित्याचमनीयं॥ त्र्यंबकमितिचंदनादि॥ वेदाहमि-
स्यपवीतम्॥ युवास्रुवासेतिवस्त्रं॥ वेदाहमित्युत्तरीयम्॥ इदंविष्णुरितिपुष्पम्॥ धूरसीतिधूपं॥ चंद्रमामनसः इतिदीपम्॥
अन्नपतेइतिनैवेद्यं॥ आचमनंपुष्पांजलिंदत्वाप्रार्थनांकृत्वास्नानवस्त्रनैवेद्यादिकंशिल्पिनेदद्यात्॥ इतिदेवस्नपनविधिः
॥ अथपुरुषसूक्तेनस्तुत्वा॥ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते॥ त्वयिस्मुप्तेजगत्सुप्तंउत्थितेचोत्थितंजगदिति॥ तमुत्था
प्यरथमारोप्यप्रासादप्रादक्षिण्येनानीय॥ यागमंडपपश्चिमद्वारि॥ आकृष्णेनेतिप्रवेश्य॥ वेद्याः पश्चिमभागेउपवेश्यमधु
पर्कंकुर्यात्॥ ततोवेद्यांकुशानास्तीर्यतदुपरिशय्यामास्तीर्य॥ वेद्याः पूर्वादिदिक्षुविष्णुमधुसूदनत्रिविक्रमवामनानाग्ने-
यकोणेषुश्रीधरहृषीकेशपद्मनाभदामोदरांश्चपूजयेत्॥ शिवादिप्रतिष्ठायांतुनमः शंभवेइतिशय्यानिवेश्य॥ पूर्वादिदि-
क्षु॥ भवंशर्वमीशानंपशुपतिं॥ आग्नेयादिकोणेषुरुद्रंउग्रंभीमंमहांतंचपूजयेत्॥ ततः शय्यायांदेवंस्थापयित्वा॥ त्रिभि-

वस्त्रैर्देवमाच्छाद्य॥ देवस्यशिरोदेशेभूमौसहिरण्यंनिद्राकलशंनमोदेवीरुपद्रुयेइतिआप्यायस्वेतिमधुसर्पिभ्यांदेवमभ्यज्य
यातेरुद्रेतितिलसर्षपैःउपलिप्यगंधादिनाभ्यर्च्य बृहस्पतेपरीतिसितंपरिधानंदद्यात् अत्रदेवस्यबृहस्पतेपरीतिमंत्रे
णहस्ते कंकणबंधनमित्येके॥ ततोदेवस्यपादनाभिवक्षःशिरस्सुविश्वतश्चक्षुरित्यालंभनं॥ ततस्तद्दक्षिणपार्श्वेछ
त्रंव्यजनं॥ चरणदेशेपादुका॥ पार्श्वयोःशांतिकुंभौ॥आसनदर्पणघंटाभक्ष्यभोज्यजलपात्रादिकंचदेवस्यपुरतःस्थाप
येत्॥ भूतेभ्यःभस्म॥ दर्भतिलैर्देवस्यपरितोरक्षार्थंप्राकारत्रयंकृत्वामंडपाद्बहिर्गत्वाप्रतिदिशंलोकपालेभ्योगंधादिपूः
र्वकंबलिंदत्वाभूतेभ्यश्चत्र्यंबकमिति बलिमंत्रस्तु॥ पूर्वदिग्वासिभ्योदिक्पतिभूताधिपतिदिग्रुद्रदिङ्मातृदिक्क्षेत्रपाले
भ्योनमइत्येवंप्रतिदिशं॥ ततःआचम्य होमंकुर्यात्॥ तद्यथा॥ॐपरायविष्णवात्मनेनमःस्वाहेतिविष्णवे॥अन्यदेवतायां
शिवात्मनेनमइत्याद्यूहः॥अनेनाष्टोत्तरशतमष्टाविंशतिरष्टौवातिलैर्यवैर्वाप्रत्येकंहुत्वाप्रतिमायांन्यासंकुर्यात्॥अंपाद
योः॥उंहृदये॥मंललाटे॥इतिप्रणवंन्यसेत्॥ भूःपादयोः॥भुवःहृदये॥स्वर्ललाटे॥इतिव्याहृतीर्न्यसेत्॥अंतालुके॥
आंमुखे॥ इंदक्षिणनेत्रे॥ईंवामनेत्रे॥उंदक्षिणकर्णे॥ ऊंवामकर्णे॥ ऋंदक्षिणगंडे॥ ॠंवामगंडे॥ लृंदक्षिणनासापुटे॥
लॄंवामनासापुटे॥एंऊर्ध्वौष्ठे॥ऐंअधरोष्ठे॥ ओंऊर्ध्वदंतपंक्तौ॥औंअधोदंतपंक्तौ॥अंललाटे॥अःजिह्वायां॥ यंत्वचि॥रंच
क्षुषोः॥लंनासिकायां॥वंदशनेषु॥शंश्रोत्रयोः॥षंउदरे॥ संकटौ॥ हंहृदये॥क्षंनाभ्यां॥लंलिंगे॥ पंफंबंभंमंदक्षिणबाहौ

तंथंदंधंनंवामबाहौ ॥ टंठंडंढंणंदक्षिणजंघायां ॥ चंछंजंझंञं वामजंघायां ॥ कंखंगंघंङं सर्वांगुलिषु ॥ इतिमातृकान्यासः ॥
ॐ रविचंद्राभ्यांनेत्रयोः ॥ सौमायहृदये ॥ बुधायस्कंधे ॥ बृहस्पतयेजिह्वायां ॥ शुक्रायलिंगे ॥ शनैश्चरायललाटे ॥ राहवे
पादयोः ॥ केतुभ्यःकेशेषु ॥ रोहिणीभ्योहृदये ॥ मृगशिरसेशिरसि ॥ आर्द्रायैकेशेषु ॥ पुनर्वसवेललाटे ॥ पुष्यायमुखे ॥ आश्ले
षाभ्योनासायां ॥ मघाभ्योदंतेषु ॥ पूर्वाफाल्गुनिभ्योदक्षिणकर्णे ॥ उत्तराफाल्गुनिभ्योवामकर्णे ॥ हस्तायहस्तयोः ॥ चित्रायेद-
क्षिणभुजे ॥ स्वात्यैवामभुजे ॥ विशाखाअनुराधाभ्यस्तनयोः ॥ ज्येष्ठाभ्योदक्षिणकुक्षौ ॥ मूलायवामकुक्षौ ॥ पूर्वाषाढाभ्यःक
टिपार्श्वयोः ॥ उत्तराषाढाभ्योलिंगे ॥ श्रवणधनिष्ठाभ्योवृषणे ॥ शतभिषेभ्योनेत्रे ॥ पूर्वाभाद्रपदाउत्तराभाद्रपदाभ्योऊर्वोः ॥ रे
वतीभ्योऽश्विनीभ्योजंघयोः ॥ भरणिकृत्तिकाभ्यःपादयोः ॥ ध्रुवायनाभ्यां ॥ सप्तर्षिभ्यःकंठे ॥ मातृकामंडलायनमःकटिदेशे ॥
विष्णुपदेभ्यःपादयोः ॥ नागवीथ्येअंगवीथ्येवनमालायां ॥ ताराभ्योरोमकूपेषु ॥ अगस्त्यायकौस्तुभे ॥ इतिग्रहादिन्यासः ॥
चैत्रायनमःशिरसि ॥ वैशाखायमुखे ॥ ज्येष्ठायहृदये ॥ आषाढायश्रावणायस्तनयोः ॥ भाद्रपदायउदरे ॥ आश्विनायकट्यां ॥
कार्तिकायमार्गशीर्षायऊर्वोः ॥ पौषायमाघायजंघयोः ॥ फाल्गुनायपादयोः ॥ संवत्सरायपरिवत्सराय इडावत्सरायवत्सरा
यनमःइति दक्षिणोर्ध्वात् ॥ प्रादक्षिण्येनचतुर्षुबाहुषु ॥ पर्वतेभ्योनमःसंधिषु ॥ ऋतुभ्योलिंगे ॥ अहोरात्रेभ्योऽस्थिषु ॥ क्षणा-
यलवाय काष्ठायैरोमसु ॥ कृतायमुखे ॥ त्रेतायैहृदये ॥ द्वापरायनितंबे ॥ कलियुगायनमःपादयोः ॥ मन्वंतरेभ्योबाहवे ॥ प

रायपरार्धायजंघयोः महाकल्पायशरीरे उदगयनायदक्षिणायनायपादयोः विषुवतेसर्वांगुलीषु इतिकालन्यासः ब्राह्मणाय मुखे क्षत्रीयायबाह्वोः वैश्यायऊर्वोः शूद्रायपादयोः संकरजेभ्योनमःपादाग्रे अनुलोमजेभ्योनमःसर्वांगसंधिषु गोभ्योनमःमुखे अजाविकाभ्योनमःहस्तयोः ग्राम्यारण्यपशुभ्योनमःसर्वत्र इतिवर्णन्यासः मेघेभ्योनमःकेशेषु अफोभ्योनमःरोमसु नदीभ्योनमः सर्वगात्रेषु समुद्रेभ्योनमःकुक्षिदेशे इतितोयन्यासः ऋग्वेदायनमःशिरसि यजुर्वेदायनमोदक्षिणभुजे सामवेदायनमोवामभुजे स र्वोपनिषद्भ्योनमःहृदये इतिहासपुराणेभ्योनमःजंघयोः अथर्वांगिरसेभ्योनमःनाभौ कल्पसूत्रेभ्योनमःपादयोः व्याकरणायवक्त्रे तर्केभ्यःकंठे मीमांसायैनिरुक्तायहृदये छंदोज्योतिःशास्त्रेभ्योनमःनेत्रयोः गीतभूतशास्त्रेभ्योनमःश्रोत्रयोः आयुर्वेदायदक्षिणभु जे धनुर्वेदायनमोवामभुजे योगशास्त्रेभ्योनमःहृदये नीतिशास्त्रेभ्योनमःपादयोः वश्यतंत्रायनमःओष्ठयोः इतिविद्यान्यासः दि वेनमःमूर्ध्नि सूर्यचंद्रलोकायनमोनेत्रयोः अनिललोकायनमोघ्राणे व्योम्नेनमःनाभ्यां समुद्रेभ्योनमोवस्तिदेशे पृथिव्येनमःपादयोः इतिवैराजन्यासः हिरण्यगर्भायनमःशिरसि कृष्णायनमःकेशेषु रुद्रायनमोललाटे यमायनमोभ्रुकुट्याम् अश्विभ्यांनमःकर्णयोः वैश्वानरायमुखे मरुद्भ्योनमोघ्राणे वसुभ्योनमःकंठे रुद्रेभ्योनमःदंते सरस्वत्यैनमःजिह्वायां इंद्रायनमःदक्षिणभुजे बलयेनमोवा मभुजे प्रह्लादाय॰दक्षिणस्तने विश्वकर्मणेवामस्तने नारदायदक्षिणकुक्षौ अनंतादिभ्यो॰वामकुक्षौ वरुणायहस्तयोः मित्राय॰पादयोः विश्वेभ्योदेवे भ्योनमःऊरुमध्ये पितृभ्योनमःजानुमध्ये यज्ञेभ्योनमःजंघयोः राक्षसेभ्योनमःगुल्फयोः पिशाचेभ्योनमःदक्षिणपादे असुरेभ्योन

म:वामपादे विद्याधरेभ्योनम:पादयोः ग्रहेभ्योनम:पादतलयोः गुह्यकेभ्योनम:गुदे पूतनादिभ्योनम:नखेषु गंधर्वेभ्यो०ओष्ठयोः
कार्तिकेयाय गणेशायकटिपार्श्वयोः इतिदेवयोनिन्यासः मत्स्यायनम:मूर्द्धनि कूर्माय०पादयोः नृसिंहायनम:ललाटे वाराहायन
म:जंघयोः वामनायनम:मुखे परशुरामायहृदि रामायबाहुषु कृष्णायनाभ्यां बुद्धायबुद्धौ कल्किनेजान्वोः केशवायनम:शिरसि
नारायणायमुखे माधवाय०ग्रीवायाम् गोविंदायनम:बाह्वोः विष्णवेनम:हृदये मधुसूदनायनम:पृष्ठे त्रिविक्रमाय०कट्यां वाम
नायनम:जठरे श्रीधरहृषीकेशाभ्यां०जंघयोः पद्मनाभायनम:गुल्फयोः दामोदरायनम:पादयोः इतिमूर्तिन्यासः अश्वमेधा-
यनम:मूर्ध्नि नरमेधायनम:ललाटे राजसूयायनम:मुखे गोसवायनम:कंठे द्वादशाहायनम:हृदि आधानेभ्योनम:नाभौ सर्व
जितेभ्योनम:दक्षिणकट्यां सर्वमेधाय०वामकट्यां अग्निष्टोमायलिंगे अतिरात्रायनम:वृषणयोः आप्तोर्यामायऊर्वोः षोडशिनेजा-
न्वोः उतथ्याय०दक्षिणजंघायां वाजपेयायनम:वामजंघायां अत्यग्निष्टोमायदक्षिणबाहौ चातुर्मास्यायनम:वामबाहौ सौत्राम-
णये० हस्तेषु पश्विष्टिभ्योनम:अंगुलीषु दर्शपौर्णमासाभ्यां०नेत्रयोः सर्वेष्टिभ्यो०रोमकूपेषु स्वाहाकारायवषट्कारायनम:स्तन
योः पंचमहायज्ञेभ्यः पादांगुलीषु आहवनीयायमुखे दक्षिणाग्नयेहृदये गार्हपत्यायनाभौ वेद्यैउदरे प्रवर्ग्यायभूषणेषु सवने-
भ्यः पादयोः इध्मेभ्यो०बाहुषु दर्भेभ्योनम:केशेषु इतिक्रतुन्यासः अथमूलन्यासः आयुधन्यासः शक्तिन्यासः अंगन्यासः इ
तिसाधारणाःसर्वत्र वैष्णवमधीकृत्यउच्यते धर्मायमूर्ध्नि ज्ञानायहृदि वैराग्यायगुह्ये ऐश्वर्यायपादयोः खड्गायशिरसि शार्ङ्ग

यमस्तके मुशलायदक्षिणभुजे हलायवामभुजे चक्रायनाभ्यां जठरेपृष्ठेच शंखायलिंगेवृषणेच गदायैजंघयोर्जान्वोश्च पद्माय गुल्फयोःपादयोः वज्रायशक्तये दंडायखड्गायपाशाय वज्रायअंकुशायत्रिशूलायपद्मायेतिशिवेद्दसायुधन्यासः लक्ष्म्यैनमोललाटे सरस्वत्यैनमोमुखे रत्यैनमोगुह्ये प्रीत्यैनमःकंठे कीर्त्यैनमोदिक्षु शांत्यैनमोहृदि तुष्ट्यैनमोजठरे पुष्ट्यैनमःसर्वत्र इतिशक्तिन्यासः अथमूलमंत्रन्यासः हृदयंहृदये शिरःशिरसि शिखाशिखायां कवचंसर्वत्र नेत्रयोर्नेत्रे करयोरस्त्रं दक्षिणवामस्तनयोः श्रीवत्सायनमः उरसिकौस्तुभाय कंठेवनमालायै इत्यंगन्यासः ओंपादयोः नंजान्वोः मोंगुह्ये भंनाभौ गंहृदये वंकंठे तेंमुखे वानेत्रयोः सुंभाले देंमूर्ध्नि वांदक्षिणपार्श्वे यंउत्तरपार्श्वे इतिद्वादशाक्षरन्यासः अथप्रतिमायांजीवन्यासः तत्रतेजोभावयित्वा बुद्धींद्रियकर्मेंद्रियमनःप्राणपंचकाहंकारशब्दतन्मात्रादिकंसर्वंसंयोज्य पुरुषभावंसंभावयित्वा सर्वसाक्षिणंभावयित्वा तत्रतत्त्वन्यासंन्यसेत् तद्यथा आत्मतत्त्वायनमः आत्मतत्त्वाधिपतयेब्रह्मणेनमःपादयोः विद्यातत्त्वाय॰ विद्यातत्त्वाधिपतयेविष्णवेनमः हृदये शिवतत्त्वाय॰ शिवतत्त्वाधिपतयेरुद्रायनमःशिरसि अथगायत्रीन्यासः सूर्पस्यतत्पादांगुष्ठयोः संगुल्फयोः विंजंघयोः तुंजान्वोः वंऊर्वोः रेंगुदे णिंवृषणे यंकटौ भंनाभौ गंजठरे देंस्तनयोः वंहृदि स्यंकंठे धींवक्त्रे मंतालुदेशे हिंनासिकाग्रे धिंचक्षुषोः योंभ्रूमध्ये योंललाटे नःपूर्वे प्रंदक्षिणे चोंपश्चिमे दंउत्तरे यांमूर्ध्नि तुंसर्वत्र तत्सवितुर्हृदि वरेण्यंशिरसि भर्गोदेवस्यधीमहिकवचे धियोयोनःनेत्रयोः प्रचोदयादस्त्रे इतिगायत्रीन्यासः अथमंत्रन्यासः अग्निमीळेपादयोः इषेत्वेतिगुल्फयोः शंनोदेवीतिजान्वे

नोः बृहद्रथंतरेतिऊर्वोः स्वस्तिनःजघ्ने दीर्घायुत्वाहृदये श्रीवश्मेतीतिकंठे त्रातारमितिवक्के त्र्यंबकमितिस्तनयोः नेत्रयोः मूर्धानमि
न्वोः बृहद्रथंतरेतिऊर्वोः स्वस्तिनःजघ्ने दीर्घायुत्वाहृदये श्रीवश्मेतीतिकंठे त्रातारमितिवक्के त्र्यंबकमितिस्तनयोः नेत्रयोः मूर्धानमि
तिमूर्ध्नि अथद्वादशाक्षरनारायणस्यमूर्तिन्यासः ओंकेशवायइतिशिरसि नंनारायणायेतिमुखे मोंमाधवायेतिग्रीवायां भंगोविं
दायेतिकंठे गंविष्णवेइतिपृष्ठे वंमधुसूदनायकुक्षौ तेंत्रिविक्रमायकट्यां वांवामनायनमः जंघयोः सुंश्रीधरायगुल्फे दंहृषीकेशायद
क्षिणगुल्फे वांपद्मनाभायवामपादे यंदामोदरायदक्षिणे अंहृत्पद्मायनमःहृदये ओंविष्णवेनमःशिरसि ब्रह्मणेशिखायां ध्रुवाय
कवचे चक्रिणेनेत्रयोः चक्रिणेनमःअस्त्रायफट् अस्त्रंहस्तयोः नमःशंभवेइतिगायत्र्येदक्षिणनेत्रे विजयायनमः सावित्र्यैवामनेत्रे
चक्रिणेचक्ररूपायपिंगलास्त्रंसर्वदिक्षु इत्यष्टांगविष्णुमंत्रन्यासः सहस्रशीर्षेतिपादयोः पुरुषएवेतिजंघयोः एतावानस्येतिजान्वोः
त्रिपादूर्ध्वमित्यूर्वोः तस्माद्विराडितिवृषणे तस्माद्यज्ञादितिकट्यां तस्माद्यज्ञात्सर्वहुतइतिनाभ्यां तस्मादश्वाइतिहृदि तंयज्ञमिति-
स्तनयोः यत्पुरुषमितिबाह्वोः ब्राह्मणोस्येतिमुखे चंद्रमामनसश्चक्षुषोः नाभ्याआसीदितिकर्णयोः यत्पुरुषेणेतिभ्रुवोः सप्तास्येति-
भाले यज्ञेनयज्ञमितिशिरसि अद्भ्यःसंभृतइतिहृदये वेदाहमितिशिससि प्रजापतिःशिखायां योदेवेभ्यःकवचे रुचंब्राह्ममितिनेत्र
योः श्रीश्चतेत्यस्त्रं इतिपुरुषसूक्तन्यासः अथशिवस्यपंचब्रह्मन्यासः अंगुष्ठयोरीशानं तर्जन्योस्तत्पुरुषम् मध्यमयोरघोरं अनामि
कयोर्वामदेवं कनिष्ठिकयोःसद्योजातं ततःकनिष्ठिकयोर्हृदयं अनामिकयोःशिरः मध्यमयोःशिखा तर्जन्योःकवचं अंगुष्ठयोरस्त्रं
विन्यस्यपरेणतेजसासंयोज्य कवचेनावगुंठ्य सर्वकर्मसुविनियोजयेत् आचमनंसर्वत्र इत्थंदेवस्यकरंन्यासंकृत्वा लिंगमुद्रांबध्वा

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवोमे अस्तु सदाशिवोम् इतिमंत्रेणेशानमुष्टिंब-
ध्नीयात् ततः अंगुल्यग्रेरुद्रमूर्त्तयेमूर्ध्नि तत्पुरुषायविद्महे महादेवायधीमहि तन्नोरुद्रः प्रचोदयात् इतितर्जन्यंगुष्ठयोरेवंगात्रम्
तत्पुरुषंसुरवे अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः इतिमध्यमांगुष्ठयोगेनतद्य-
घोरम् वामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमः कालायनमः कलविकरणायनमो बलविकरणायनमो बलायनमोबल
प्रमथनायनमः सर्वभूतदमनायनमोमनोन्मनायनमः इत्यंगुष्ठानामिकयोगेनगुल्ये सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः भ
वेभवेनातिभवेभवस्वमांभवोद्भवायनम इति कनिष्ठिकांगुष्ठयोगेनपादादारभ्यमस्तकांतम् यावन्मूर्तिव्यापकत्वेनप्रह्वन्यसेत्
ततः ईशानः सर्वविद्यानांनमइतिशशिनमुपरि तनमूर्ध्निईश्वरः सर्वविद्यानामितिकल्पितंचंद्रोभयदलंपूर्वमूर्ध्नि ब्रह्माधिपतिर्ब्रह्म
णोधिपतिरितिसृष्टांदक्षिणमूर्ध्नि शिवोमेअस्तुनमइतिमरीच्यामुत्तरमूर्ध्नि सदाशिवोंनमइतिज्वालिनींपश्चिममूर्ध्नि तत्पुरुषा
यविद्महेनमइति पूर्ववक्त्रेशांतिं महादेवायधीमहीतिदक्षिणवक्त्रेविद्यां तन्नोरुद्रइत्युत्तरवक्त्रेप्रतिष्ठां प्रचोदयादितिपश्चिमवक्त्रे
धृतिं इतितत्पुरुषस्यकलाचतुष्टयन्यासः ततोअघोरेभ्योनमइतितमांसुरसि अथघोरेभ्योमोहायैनमइतिग्रीवायाम् घोरेभ्योक्षमा-
यैइतिस्कंधयोः घोरतरेभ्योनिद्रायैनमइतिनाभौ सर्वेभ्यः सर्वव्याध्यैनमइतिकुक्षौ सर्वशर्वेभ्यः मृत्यवेनमइतिपृष्ठे नमस्तेअस्तुक्ष
धायैनमइतिवक्षसि रुद्ररूपेभ्यः तृषायैनमइतिउरसि इत्यष्टावघोरकलान्यासः वामदेवानमइतिरजांगुदे ज्येष्ठायैनमइतिरक्षां-

लिंगे श्रेष्ठायनमइतिरतिंदक्षिणोरो रुद्रायनमइतिकामांवामोरौ कालाय॰दक्षिणजानौ कलविकरणायनमइतिसंजीविन्येवा-
मजानौ बलविकरणायक्रियायैदक्षिणजंघायां बलायनमोवृत्स्यैवामजंघायां बलविकरणायन॰छायायैदक्षिणस्फिचि बलप्रम-
थनायधात्रींवामस्फिचि सर्वभूतदमनायनमइतिब्रह्माणींकट्यां मनसेनमइतिशोषिणींदक्षिणपार्श्वे उन्मनायनमइतिवामपार्श्वे
इतित्रयोदशकलान्यासः सद्योजातंप्रपद्यामिन मइतिसिद्धिंदक्षिणपादे सद्योजातायनमइतिऋद्धिंवामपादे भवेनमइतिजयांदक्षि-
णपाणौ अभवेनमइतिलक्ष्मींवामपाणौ नातिभवेमेधांनासायां भवस्वमांनमइतिकांतिंशिरसि भवायनमइतिस्वधांदक्षिणबाहौ
उद्भवायनमइतिप्रभांवामबाहौ इतिसद्योजाताष्टकम् ततस्तमाद्याःसर्वाःकलाअन्नविंशांतिंतिकलांतरन्यासभावनांकृत्वामुद्राःप्रद-
र्शयेत् विद्यादेवंहंसंसंपाद्यहंसहंसेतितद्दयादिन्यासंकुर्यात् अथनृसिंहे नृसिंहउग्ररूपत्वंज्वलज्वलप्रज्वलस्वाहा इतिमंत्रः
नारसिंहोयदास्थाप्यस्त्वधिवास्यनिशागमे कृत्रिमंवाथसाक्षाद्द्वापशंदत्वाबलिंहरेत् इतिन्यासंकृत्वा परमेष्ठिनंनमस्कृत्यानि-
द्रामावाहयाम्यहं मोहिनींसर्वभूतानांमनोविभ्रमकारिणीम् विरूपाक्षेशिवेशांतिआगच्छत्वंतुमोहिनी वासुदेवहितेकृष्णोकृ-
ष्णांबरविभूषिते आगच्छसहसाजस्त्रंसमस्तसंसारमोहिनी क्षुत्पस्वसंहरेदेविकुमार्यैकांतमानसे श्रमेनिश्वासबाह्येवेआगच्छशु
वनेश्वरि नमःसत्वरजोपेतेआगच्छवरवर्णिनि मनोबुद्धिरहंकारसंहारस्त्वंसरस्वति शब्दःस्पर्शश्चरूपंचरसोगंधश्चपंचमः
आगच्छगृह्णसंक्षिप्यमोहपाशनिबंधिनि भवस्योसत्तिहेतुस्त्वंयावदाभूतसंप्लवम् ध्रुवःकल्पांतसंध्यायांवससेत्वंचराचरे भागि

शय्याप्रसूप्तस्यवासुदेवस्यशासने त्वंभूतिष्ठासिवैदेविमुनियोनिसमुत्थिते पितृदेवमनुष्याणांसयक्षोरगरक्षसाम् पशुरूपक्षिमृगा
णांचयोगमायाविवर्द्धिनी वससेसर्वतीर्थेषुमातेवहितकारिणी एहिसावित्रिमूर्तित्वंचक्षुस्पर्शोस्थानगोचरे विशनासापुटेदेविकंठेन्वो
लुंठिताविश प्रतिभावयमांसर्वमातृत्वंदेविसुंदरि इदमर्घ्यंमयादत्तंपूजेयंप्रतिगृह्यतां उपप्रागात्पुरमितितस्याःपूजाविधिःस्मृतः नि
द्राकलशेतिनिद्रांपूजयित्वा लोकपालक्षेत्रपालभूतेभ्योबलिंदत्वा स्थाप्यदेवशय्यांतःप्राच्यांसर्वतोभद्रेपूजयेत् विष्णुश्चेद्धांदशान
रेचक्रमध्येऽष्टदलेपद्मेमूलमंत्रेणदेवंनिवेशयेत् ओंहृल्लद्यायनमःइतिकर्णिकायांल्हदयंपूजयेत् विष्णवेनमइतिशिरःपूर्वपत्रे ब्र
ह्मणेनमइतिशिखांदक्षिणे भवायनमइतिकवचंपश्चिमे चक्रिणेनमइतिफट्अस्त्रमुत्तरे शंभवेनमइतिगायत्रीमाग्नेयदले विजया
यनमइतिसावित्रीमीशानदले ज्योतीरूपायनमोनैर्ऋते चक्रिरूपायनमइतिपिंगलास्त्रंवायव्ये इतिगर्भावरणम् आरात्पूर्वा
दिक्रमेण केशवनारायणमाधवगोविंदविष्णुमधुसूदनत्रिविक्रमश्रीधरहृषीकेशपद्मनाभदामोदराइतिद्वादशमूर्तीःपूजयेत्
इतिद्वितीयावरणं प्रागादितः खड्गायनमः गदायैनमः चक्रायनमः शंखायनमः पद्मायनमः हलायनमः शार्ङ्गायनमः अथिमू
इतितृतीयावरणम् अथमूर्तिपाः
त्र्योधिपतयेनमः यजमानमूर्तयेनमः यजमानमूर्त्यधिपतयेनमः उग्रायनमः अर्कमूर्तयेनमः
पृथिवीमूर्तयेनमः पृथिवीमूर्त्यधिपतयेशर्वाय अर्कमूर्तये अर्कमूर्त्यधिपतयेरुद्राय जलमूर्तये जलमूर्त्यधिपतयेभवाय वायुमूर्तये वायुमूर्त्यधिपतये
ईशानाय इंदुमूर्तये इंदुमूर्त्यधिपतयेमहादेवाय खमूर्तये खमूर्त्यधिपतयेभीमाय इत्यष्टौमूर्तीः तदधिपांश्चार्चयेत् वैष्णवंचेत्तदा पूर्वे पृथ्वीमूर्तये

पृथ्वीमूर्त्यधिपतयेवासुदेवायनमः दक्षिणे जलमूर्तयेनमः जलमूर्त्यधिपतयेसंकर्षणायनमः पश्चिमे अग्निमूर्तयेनमः अग्निमू-
र्त्यधिपतयेप्रद्युम्नायनमः उत्तरे वायुमूर्तयेनमः वायुमूर्त्यधिपतयेअनिरुद्धायनमः मध्ये खमूर्तयेनमः खमूर्त्यधिपतयेनारायणाय॰
इति शैवमूर्तिपंचपक्षे ब्रह्मविष्णुरुद्रेश्वरसदाशिवाएवमूर्तिपाः इंद्रादयस्तुसर्वत्रपूजनीयाः ततः आचार्यः क्रमेणपलाशोदुंबरा-
श्वत्थापामार्गसमिधांप्रत्येकंद्वादशसहस्रंषट्त्रीण्यष्टसहस्रमष्टशतंवाहिरण्यगर्भइतिकुंडसमीपेसंस्थाप्य शांतिकपौष्टिकैर्मंत्रैर्यथा-
विभागंकल्पितंजोजुहुयुः प्रतिकुंडमेकैकोऋत्विक्मूर्तिपालस्तत्तन्मंत्रेणपूज्यंते शंनोवातः शंनइंद्राग्नी शंनोदेवीतिशांतिकमंत्राः पुष्टिर्न
रण्या गयस्फानः त्र्यंबकमितिपौष्टिकाः ततोमूर्त्योः पूर्वकुंडे पलाशसमिधामष्टसहस्रमष्टशतंवातिलैर्वा अग्निमीळेतिजुहुयुः इषेत्वे-
तिदक्षिणे अग्नआयाहीतिपश्चिमे शंनोदेवीत्युत्तरे यदाअष्टौकुंडानितदावीषट्इतिषट् आग्नेये दशमणवाषड्वायत्रीं [illegible] नैर्ऋते जा-
तवेदसइतिवायव्ये नमोब्रह्मणेइतिईशानकुंडे मूर्धानंदिवइतिपूर्णाहुतिंजुहुयुः आहुतिसंपातान्शांतिकलशेकुंडसमीपेपातयेयुः तन-
तोमूर्तिपलोकपालेभ्यः समिद्भिः घृतेनतिलैर्वाऽष्टसहस्रमष्टशतंवाजुहुयात् तेषांमंत्रास्तु स्योनापृथिवीतिपृथिवीमूर्तेः अघोरेभ्योम-
तिपतेःसर्वस्य इंद्रायेंदोइतिइंद्रस्य अग्निंदूतमित्यग्नेः पशूनामित्यग्निमूर्तिपतेः पशुपतेः अग्नआयाहीत्यग्नेः असिहिवीरेतियजमा-
नमूर्तेः तमिंद्रंजोहवीमीतियजमानमूर्तिपतयेरुद्रस्य यमायसोममितियमस्य उदुत्यमितिसूर्यमूर्तेः आवोराजानमितिसूर्यमूर्तिपतयेरुद्रस्य
— अस्मन्वंतमितिनिर्ऋतेः आपोहिष्ठेतिजलमूर्तेः विश्वूषमितिजलमूर्तिपतयेभवस्य इमंमेइतिवरुणस्य वातआवातुवातिवायुमूर्तेः

तमीशानमितिवायुमूर्तिपतयेईशानस्य आनोनियुद्भिरितिवायोः वयं सोमेतिसोमस्सूर्ययोः इदंमंसुष्मोनिसोम मूर्त्तिपतयेमहादेव-
स्य आदित्यलस्येतिस्वमूर्त्तेः मृगोनभीमइतिस्वमूर्तिपतयेभीमस्य अभित्यंदेवंसवितारमितीशानस्य ततः सहस्राष्टशतान्यत
मसंख्ययामहाव्याहृतिभिस्तिलयवव्रीहिचर्वाज्यैः क्रमेणप्रत्येकंजुहुयुः ततोगुरुःस्थाप्यलिंगकेनमंत्रेणघृतेनतिलैर्वा सहस्रम-
ष्टशतंवाहुत्वापूर्णाहुतिंहुत्वा देवस्यदक्षिणेकर्णेहोमंनिवेद्य पूर्वकुंडेघृताहुत्यष्टकंमूलमंत्रेणहुत्वादेवपादौस्पृशेत् मूलमंत्रेणपूर्वो
क्तसंख्ययायाम्यकुंडेहस्तेनदधिहुत्वा देवनाभिर्वारुणकुंडेक्षीरंहुत्वाहृदिस्पृशेत् सौम्यकुंडेमध्वाहुती हुत्वामूर्द्धानंस्पृशेत् वारु-
णकुंडेमिश्रंघृतादिचतुष्टयंहुत्वातेनैवपूर्णाहुतिंहुत्वा देवसर्वांगंस्पृशेत् ततःकूर्मशिलांब्रह्मशिलांपिंडिकांवाहनानिपरिवारकदे-
वांश्चवैदिकैर्नाममंत्रैर्वासंपूज्य मुख्यप्रतिमायावामेऽधिवासयेत् तानिमधुघृतेनाभ्यज्य प्रक्षाल्यसंपूज्यवस्त्रेणाच्छाद्य प्रधानप्रति-
मापिंडिकायाःस्वमंत्रन्यासंकुर्यात् तत्रविष्णुश्चेत्स्थाप्यस्तदा ओं घंढंवंपंभंफंलक्ष्म्यैनमः एतानिपंचाक्षराणितद्बीजैः शिखाक
वचनेत्रसंज्ञकानिहुंफडितिवचनसमुदाय इतिपिंडिकायांपंचांगानिन्यस्य तत्वत्रयमूर्तिपाश्चपूर्ववद्विन्यसेत् तदा ॐ ह्रीं श्रीं ह्रां सः पर-
ब्रह्मणेसर्वाधारायनमः ओं ह्रां श्रीं ह्रीं दिव्यतेजोधारिण्यैस्कंभगायैनमः इतिमंत्राभ्यामधिवासयेत् इत्यधिवासनम् प्रासादोपिचेत्
तनरत्नस्याप्यधिवासनं तत्रप्रासादाग्रेएकाशीतिपदमंडलमक्षतैःकृत्वा तेषुपदेषुसप्तधान्यपुंजान्कृत्वा जलपूर्णानेकाशीतिकुंभा-
नाहृत्य तत्रनवनवकानांमध्येमध्यमंकोष्टंज्ञात्वातेषुकुंभान्मध्यपूर्वादिक्रमेणन्यस्य मध्यकुंभे शम्युदुंबराश्वत्थचंपकाशोकप-

लाशप्लक्षन्यग्रोधकदंबाम्रबिल्वार्जुनवृक्षसंभवं पल्लवद्वादशकं सोमायवनस्पत्यंतर्गतायनमइतिनिक्षिपेत् ततःपद्मकरोचनादूर्वांकुर
दर्भपिंजूलश्वेतपीतसर्षपसितरक्तचंदनजातीकुसुमनंद्यावर्त्तमितिदशकंपूर्वे यवव्रीहितिलरुक्मवर्णरजतसमुद्रगामिनीकूलमृत्तिका-
भूम्यसंस्पृष्टगोमयमितिसप्तकमाग्नेये सहदेवीविष्णुक्रांताभृंगराजमहौषधीशमीशतावरीगुडूचीश्यामाकमित्यष्टकंयाम्ये कदली-
पूगफलनारिकेलबिल्वनारिंगमातुलिंगबदरामलकमितिफलाष्टकंनैर्ऋते मंत्रसाधितंपंचगव्यंवारुणे शम्युदुंबराश्वत्थन्यग्रोधपला
शकषायपंचकंवायव्ये शंखपुष्पीसहदेवीबलाशतावरीकुमारीगुडूचीवचाव्याघ्रीतिमूलाष्टकंसौम्ये वल्मीकादिसप्तमृत्तिकाई-
शानकुंभेनिधाय हिरण्यवर्णामितिमध्यकुंभान भिमंत्र्यशेषान्गंधोदकेनपूरयित्वा मूलमंत्रेणाभिमंत्र्य सूत्रेणावेष्ट्यांतर्बहिरधे-
स्नादूर्ध्वंचप्रासादंपंचगव्येनसंप्रोक्ष्य मूर्धानंदिवइतिवल्मीकमृदाविलिप्य समुद्रज्येष्ठाइतीशानदिक्स्थेनमृत्तिकाकुंभेनस्नपयेत्
यज्ञायज्ञेतिवायव्येनकषायकुंभेन पयःपृथिव्यामितिवारुणेनपंचगव्यकुंभेन याःफलिनीरितिनैर्ऋतेनफलकुंभेन हंसःशुचिष
दितिसौम्यस्थमूलकुंभेन विष्णोरराटेतिपूर्वकुंभेन सोमराजानमितिवन्हिस्थकुंभेन विश्वतश्चक्षुरितियाम्यकुंभेन नमोस्तुसर्पे-
भ्यइतिमध्यकुंभेन इदमापःप्रवहतेत्यष्टाभिःपूर्वादिक्रमेणप्रासादंसशिखं संस्नपयेत् एकाशीतिकुंभासंभवेतुगंधोदकपूरितेनैके
नकलशेन देव्यायकर्मणेशुंधध्वमितिसंप्रोक्ष्य सूत्रेणावेष्ट्यस्नापयित्वा देवरूपंप्रासादंचिंतयित्वा पताकादिनाशोभयित्वा गंधादि
नापूजयित्वा तस्याप्यध स्नाद्देवंसंचिंत्य मंत्रेणप्रासादमधिवासयेत् तद्यथा ओंह्रींसर्वदेवमयाचिंत्यसर्वरत्नोज्ज्वलाकृते यावच्चंद्र

श्चसूर्यश्चतावदत्रस्थिरोभवेत्यधिवास्य पिंडिकावाहनपरिवारदेवतानांतत्तन्मंत्रैः प्रत्येकमष्टाविंशतिसंख्याकंहोमंतिलैः कृत्वा
मूलमंत्रेणचर्वष्टोत्तरशतंहुत्वाचतस्रोगाः विष्णुगायत्र्यादुग्ध्वाक्षीरेणविष्णुगायत्र्याचरुंश्रपयित्वा देवायनिवेद्य द्वादशब्राह्मणान्भो
जयित्वा विष्णुःप्रीयतामितिनिवेदयेत् ततः आचार्यायधेनुंदद्यात् रात्रौजागरणंकुर्यात् इतिप्रासादाधिवासनम् अत्रज्येष्ठक
निष्ठानांप्रतिमानांसप्तरात्रंपंचरात्रंत्रिरात्रमेकरात्रंसद्योवावल्यतमधिवासयेत्इतिपद्धतिकारः अत्रश्लोकाः अनेकदिननिर्वर्त्येत्व
धिवासनकर्मणि होमानष्टौसहस्राणिविदधीरन्पृथक्पृथक् तस्मिन्नेकाहनिर्वर्त्येकुर्यादष्टोत्तरंशतम् प्राग्वत्पूर्णाहुतिंदत्वासक्क
ज्जपंतिद्वारपाः यद्वाप्रतिदिनंहोममष्टोत्तरशतंशतं देशिकोमूर्तिपैःकुर्यात्यावत्कार्यंसमाप्यते संध्याकृतिसृषुवर्लिमंत्रैर्दद्या-
द्यथोदितैः आचार्यदक्षिणादेयाऋत्विग्भ्यश्चस्वशक्तितः भोजनंचतथान्येभ्योदेयंवित्तानुसारतः विनाधिवासनंयज्ञःकृतोपिनफ
लप्रदइति ततोगुरुर्बहिर्निर्गत्यप्रासादाभिमुखोभूत्वादेवरूपंध्यायेत् पादोपादशिलास्तस्यजंघापादोर्ध्वमुच्यते गर्भश्चैवोदरंज्ञेयंकटि
श्चकटिमेखला स्तंभाश्चबाहवोज्ञेयाघंटाजिह्वाप्रकीर्तिता दीपःप्राणोस्यविज्ञेयो ह्यपानोजलनिर्गमः ब्रह्मस्थानंयदेतच्चतन्नाभिःपरिकी
र्तितः हृत्पद्मंपिंडिकाज्ञेयाप्रतिमापुरुषःस्मृतः पादचारस्त्वहंकारोज्योतिस्तच्चक्षुरेवच तदूर्ध्वंप्रकृतिस्तस्यप्रतिमात्मास्मृतोबुधैः नल-
कुंभादधोद्वारंतस्यप्रजननंस्मृतं शुकनासाभवेन्नासागवाक्षःकर्णउच्यते कपोतपालिःस्कंधोस्यग्रीवाचामलसारकः कलशस्तुशिरो-
ज्ञेयंमज्जाक्षिमरसंहितत् मेदश्चैवसुधांविद्यात्प्रलेपोमांसउच्यते अस्थीनिचशिलास्तस्यस्नायुःकीलादयःस्मृताः चक्षुषीशिखरा

स्तस्य ध्वजाः केशाः प्रकीर्तिताः एवं पुरुषरूपं तं ध्यात्वा च मनसा सुधीः प्रासादं पूजयेत्पश्चाद्गंधपुष्पादिभिः शुभैः सूत्रेण वेष्टयेद्देवं वाससा
स्तस्य ध्वजाः केशाः प्रकीर्तिताः एवं पुरुषरूपं तं ध्यात्वा च मनसा सुधीः प्रासादं पूजयेत्पश्चाद्धूपपुष्पादिभिः शुभैः सूत्रेण वेष्टयेद्देवं वाससा
तारिकल्पयेत् प्रासादमेवमभ्यर्च्य वाहनं चाग्रमंडप इति ततः कुंडवास्तोष्पते इति मंत्रेणाष्टोत्तरशतं हुत्वा देवमंत्रेण च हुत्वा पूर्णाहुत्यंतं स
वं कृत्वा दिग्बलिं दत्वा आत्मानं निवेद्य प्रणमेत् यत्र तु स्वयंभूर्देवः प्रागेव वा प्रतिष्ठितः प्रासादश्चैव नूतनस्तत्रापि तदुत्तरे मंडपं कृत्वा पूर्ववद्गु
पुण्याहवाचनं नांदीश्राद्धं देवप्रतिष्ठोक्तं मंडपस्थापनं ऋत्विग्वरणादिकं कुर्यात् तत्र गुरुर्वेद्यां तद्देवतामंडलं कृत्वा वास्तुदेवतापूजनाग्निप्रति
ष्ठागृहपूजाज्यभागोत्तरग्रहहोमशिरव्यादिवास्तुपीठदेवताः वास्तुदेवहोमं काशीतिकलशस्थापनानि कृत्वा तैः प्रासादं क्षालयित्वा य
जमानमभिषिंच्य प्रासादमुत्सृजेदेतावानेव विधिः अथ मंडपादुत्तरतः पूर्वकल्पिते शांतिकलशादिजलैः सपरिकरं यजमानमभिषिंचेयु
ततः आचार्यमूर्तिपब्राह्मणस्थपत्यादीन् परितोष्य प्रासादोत्सर्गं कुर्यात् तत्र मासपक्षाद्युल्लिख्य इमं शिलेष्टकादार्वादिनिर्मितं कलशीजग
तीप्राकारपरिवारगोपुरपरिवारदेवतालयसंयुतं तत्तद्देवतालोककामः कुलद्वयानुग्रहायामुकदेवताप्रीतये उत्सृजामीति कुशयवजलानि
क्षिप्त्वा देवं नत्वा ब्राह्मणान्भोजयेदिति ततः प्रातः आचार्यो मूर्तिमूर्तिपतिलोकपालमंत्रैः प्रतिदैवतमष्टशतमष्टाविंशतिर्वा पूर्णाहुत्यंतं
स्वकुंडे हुत्वाधिवासितां कूर्मशिलां ब्रह्मशिलां पिंडिकां च त्रातारमिति गृहीत्वा विघ्नाभावार्थं पुष्पोदकधारया अरुणमंत्रेण शं ता तीयेन वा
प्रासादमभ्युक्ष्य महोइद्रेणेति दर्भेणोल्लिख्यास्य पूतेन जलेन पुनः प्रोक्ष्य प्रासादस्य द्वारस्य मध्याद्यवेन यवार्धेन वंशान्नोऽत्तरावाम्ब्रि
त्वस्नानादिसंस्कृतां कूर्मशिलां प्रणवेन पंचरत्नोपरि निधाय तच्छूष्मे सौवर्णं कूर्मं द्वारसंमुखं निधाय तदुपरि रत्नानि निधाय मद्भूर्मि

शाङ्कर्युक्तां पंचचत्वारिंशाङ्कर्तयुतां वा ब्रह्मशिलामधिवासितां निदध्यात् ओंनमोव्यापिनिस्थिरे अचलेध्रुवे ओंश्रीं लस्वाहेतिमं
त्रेण यथाशक्ति संपूज्य प्रार्थयेत् त्वमेव परमा शक्तिस्त्वमेवासनधारिका शिवाज्ञयात्वया देविस्थातव्यमिह सर्वदेति ततो वर्णाध्व
नेनमः पदाध्वनेनमः मंत्राध्वनेनमः भुवनाध्वनेनमः तत्वाध्वनेनमः सकलाध्वनेनमः इति सकलमध्वानं तदारूढं ध्यायेत् ततः
पुण्याहवाचनं कृत्वा मूलमंत्रेणाष्टोत्तरशतं हुत्वा षड्विंशत्कं पंचचत्वारिंशत्कं वा ब्रह्मशिलागर्तेषु प्रादक्षिण्येन सद्रत्नाहस्तेन रत्न-
न्यासं कुर्यात् श्वभ्ररहिते ब्रह्मशिलोपरिभागे सश्वभ्रां पिंडिकां पूर्वपश्चिमानने प्रासादे सौम्यप्रणालीं दक्षिणोत्तरानने पूर्वप्रणालीं भुन
वसूक्तेन निधाय देवपत्नीलिंगकेन मंत्रेण पिंडिकामभिमंत्र्य तत्र विष्णोः स्थापनायां श्रीश्चते॰ रुद्रस्य गौरीर्मिमाय॰ सूर्यस्योषस्तावि
त्रमित्यादिना ततआत्मतत्वायनमः आत्मतत्वाधिपतये क्रियाशक्त्येनमः विद्यातत्वाय॰ विद्यातत्वाधिपतये ज्ञानशक्त्येनमः शिवात
त्वायनमः शिवातत्वाधिपतये इच्छाशक्त्येनमः इति तत्वन्यासः प्रतितत्वं मूर्तिमूर्तिपतिलोकपालान्विन्यसेत् ततः आधारश-
क्त्येनमः इति न्यस्यानंतासनादिवन्हितत्वांतपीठपूजां निर्वर्त्य आसनशक्तिभ्योनमइत्युक्त्वाभ्यर्च्य सर्वदेवमयी शान्तिस्त्रैलोक्याह्ला
दकारिणि त्वां प्रतिष्ठापयाम्यत्र मंदिरे विश्वनिर्मिते यावच्चंद्रश्च सूर्यश्च यावद्देषा वसुंधरा तावत्त्वं देवदेवेशि मंदिरे अस्मिन्स्थिराभवेति तां
प्रार्च्य प्रणवं भ्वक्षे वात्यषोडशस्वरान् तेषां परितो व्यंजनानि न्यस्य श्वभ्रांतः रत्नादीन्विन्यसेत् यथावाल्यपरिधीयवव्रीहिनिष्पा
वप्रियंगुतिलमाषनीवारशालिसिन्द्धार्थकाच् वज्रमौक्तिकवैडूर्यशंखस्फटिकपुष्परागचंद्रकांतेंद्रनीलपद्मरागान् मनःशिलाहरिता

स्रांजनश्यामांजनकासीससौराष्ट्रीरोचनागैरिकपारदान् सोवर्णरोप्यताम्रआयसत्रपुसीसकांस्यारकूटतीक्ष्णलोहानि श्वेतरक्तचंद
नागरुअर्जुनोशीर वैष्णवीसहदेवीलक्ष्मणाचेति तत्रबीजानामभावेयवान् रत्नानामभावेवज्रं धातूनामभावेहरितालंतन्माद्यभावेसुव
र्णं ओषधीनामभावेसहदेवींन्यसेदिति एवंन्यस्तानांरत्नानांदिक्पालमंत्रैरालंभनंकृत्वा पृथ्वीमेरुकूर्मवाहनानिसौवर्णानिद्वारोन्मुखा
नि पारदंचतस्मिन्मध्यश्वभ्रेनिधाय गुग्गुलरसेनरत्नादिकंस्थिरीकृत्य मधुपायसेनश्वभ्रमनुलिप्य वस्त्रेणाच्छाद्यकवचेनावगुंठ्यास्त्रमंत्रे
णसंरक्ष्य गृह्यवैप्रतिष्ठेतिप्रासादमभिषिंच्य इंद्रादिभ्योबलिंदत्वाचामेत् एवंपिंडिकांप्रतिष्ठाप्यप्रासादाद्बहिरष्टदिक्षुस्थंडिलानिसपा-
घसंस्कृत्यतत्तत्स्थंडिलानामीशानभागेषुकलशान्मंत्रवद्विन्यस्याऽग्निंप्रणीय प्रतिस्थंडिलंपलाशसमिधामष्टोत्तरसहस्रमष्टशतंवामूलमं-
त्रेणहुत्वाज्येनच नारायणायविद्महेवासुदेवायधीमहि तन्नोविष्णुःप्रचोदयादितिमंत्रेणाष्टोत्तरशतमष्टाविंशत्यष्टौवाहुत्वाचार्योऽष्टदिक्
संस्थेभ्यःकुंभेभ्यःपात्रेतोयमादाय मूलमंत्रेणशतकृत्वोभिमंत्र्यप्रतिमासन्निधौगत्वा सर्वतीर्थमयमिदंजलमितिध्यायन्देवमूर्ध्न्यभिषिंचेत्
नरसिंहेनहुंफडंतेनदेवस्यदिग्बंधनंकृत्वामूर्तिपैःसहदेवंप्रार्थयेत् प्रबुध्यस्वमहाभागदेवदेवजगत्पते मेघश्यामगदापाणेप्रबुद्धकमलेक्ष
ण प्रबुद्धस्वधरानंतवासुदेवनमोस्तुतेइति जलक्षीरकुशाग्रतिलतंदुलयवसिद्धार्थकपुष्पाणिशंखेकृत्वा शंखमुद्धृत्यदेवायार्घ्यंदत्वाउत्ति-
ष्ठब्रह्मणस्पते इत्युत्थाप्यरथमुपवेश्य देवस्यपुरतोगुरुःपृष्ठतोयजमानःपार्श्वतोमूर्तिपाएवंपरिक्रम्य रथादवतार्यप्रासादद्वारसन्मुखंबलिं
गंकृत्वाऽर्घ्यंदत्वाप्रासादंप्रवेशयेदिति ततःसयजमानोदेशिकोदेवंपिंडिकायांस्थापयेत् तद्यथा सकलमेईश्वरभाक्यव श्वभ्रन्यासद्रव्यसहि

नंद्योवर्णपद्मंश्वभ्रेनिधाय प्रधानपुरुषोयावद्यावच्चंद्रदिवाकरौ तावत्त्वमनयाशक्त्यायुक्तोमंत्रैवस्थिरोभवेत्युक्त्वा ध्रुवाद्यौर्ध्रुवापृथिवीतिमं-
त्रंपठित्वायवयवान्हूर्वोत्तराश्रितमीशानाश्रितंवादेवंपिंडिकाश्वभ्रेनिधाय स्थिरोभवशाश्वतोभव इत्युक्त्वापिंडिकालिंगांतरालेवालुकासी-
सकादिभिर्दृढंपूरयित्वापुनर्नचालयेत् ततोविश्वतश्चक्षुरित्युक्त्वादेवमूर्ध्निहस्तंनिधाय परंदेवंध्यात्वा रुद्रसूक्तरैवतसामनीजप्त्वाप्राति
ष्ठिकमंत्रान्जपेद् तत्रविष्णोः अतसीपुष्पसंकाशंशंखचक्रगदाधरं संस्थापयामिदेवेशंदेवोभूत्वाजनार्दनं रुद्रस्य त्र्यक्षंदशबाहुंचचंद्रा
र्द्धकृतशेखरम् गणेशंवृषभस्थंचस्थापयामित्रिलोचनम् अथब्रह्मणः ऋषिभिःसंस्तुतंदेवंचतुर्वक्त्रंजटाधरम् पितामहंमहाप्राज्ञंस्थाप
याम्यंबुजोद्भवम् सूर्यस्य सहस्रकिरणंशांतमप्सरोगणसेवितम् पद्महस्तंमहाबाहुंस्थापयामिदिवाकरम् ततोदेवस्यहृदयंस्पृशन्
जपेद् तद्यथा विष्णोःपुरुषसूक्तं रुद्रस्यरुद्रं ब्रह्मणोब्राह्मं रवेःसौरम् अन्येषांतत्तत्प्रकाशकान्मंत्रान्जपित्वा प्रणवव्याहृतिभि-
रःसहितांगायत्रीं प्राणसूक्तंचजपित्वासांनिध्यंकुर्यात् नमस्तेत्यक्तसंगायसंतोषपरमात्मने ज्ञानविज्ञानरूपायब्रह्मतेजोनुशालिने गुणाति
क्रांतवेगायपुरुषायमहात्मने अव्यक्तायपुराणायविष्णोसन्निहितोभव भगवन्देवदेवेशत्वंपिता सर्वदेहिनां त्वयाव्याप्तमिदंसर्वंजगत्स्था
वरजंगमम् त्वमिंद्रःपावकश्चैवयमोनिर्ऋतिरेवच वरुणोमारुतःसोमोईशानप्रभुरव्ययः येनरूपेणभगवान्व्याप्तंचभुवनत्रयम् तेनरूपेण
देवेशअर्चायांसन्निधोभव सर्वमंत्रादिदेवेशलोकानुग्रहकाम्यया अत्रार्चायांमहादेवभवसन्निहितःसदा सूर्याचंद्रमसौयावद्यावत्ति-
ष्ठतिमेदिनी तावत्त्वयात्रदेवेशस्थातव्यंस्वेच्छयाप्रभोइति अथस्थापितस्यपरिवारदेवताः नंदिमहाकालवृषभभृंगिरिटिस्कंदोमाविन-

नायकविष्णुब्रह्मजयंतेंद्राग्नीयमनिर्ऋतिवरुणवायुसोमेशानाप्सरोगणगंधर्वगुह्यकविद्याधरादीन् रुद्रस्य ब्रह्मणोविष्णवादयः
परिवारदेवताः विष्णोर्ब्रह्मादयः एकंवांडि विनायकादीनांमपिपरि कल्पनं ततः कुंडेष्वंगहोमः ततः पूर्वकुंडेहृदयमंत्रेणाज्याहुतिर्वि
शांतिकं दक्षिणकुंडेशिरोमंत्रेण पश्चिमेशिखामंत्रेण उत्तरेकवचमंत्रेण आचार्यकुंडेनेत्रमंत्रेण पुनः पूर्वकुंडे अस्त्रमंत्रेण ततः आ
युधमंत्रेर्हुत्वाप्रार्थयेत्त् तद्यथा लोकानुग्रहहेत्वर्थं स्थिरीभवस्वरवासने सान्निध्यंहिमहादेवप्रत्यहंपरिवर्त्तय माभूत्प्रजाविरा
मोस्मिन्नृपजमानः समृध्यताम् संपादयसतोराष्ट्रं सर्वोपद्रववर्जितम् क्षेमेणवृद्धिमतुलांस्वरवमक्षयमश्नुताम् इतिसंप्रोर्थ्यविधि
नादेवंसांगंसमर्चयेदिति ततोबाहिरिंद्रादींस्तत्तन्मंत्रैः स्थापयेत् विष्णुश्चेच्चंडप्रचंडजयविजयान् शिवश्चेन्नंदिमहाकालभृंगि-
गणेशान् सूर्यश्चेद्दंडपिंगलमाठरारुणान् अथशिवस्यवाहनादिपूजयेत् यस्यसिंहारथेयुक्ताव्याघ्रीभूतास्तथोरगाः ऋषयो-
लोकपालाश्चसोमोविष्णुःपितामहः नागायक्षाः सगंधर्वायेचदिव्यानभश्चराः तमहंत्र्यक्षमीशानंशिवंरुद्रमुमापतिम् आवाह-
यामिसगणंसपत्नीकंवृषध्वजम् आगच्छभगवन्रुद्रानुग्रहायशिवोभव शाश्वतोभवपूजांमेगृहाणत्वंनमोस्तुते ओंस्वागतमस्तु-
स्वागतमनुस्वागतंभगवतेनमोनमः सोमायसगणायसपरिवारायप्रतिगृह्णातु ओं भगवन्मंत्रपूतमिदमर्घ्यंपाद्यमाचमनीयमा-
चमनीयमासनब्रह्मणाभिहितंनमोनमः स्वाहेति आगच्छभगवन्नित्यादिकामंत्राऊहेनसोमायपदवर्जिताः सर्वसाधारणा एवंसंपूज्य
दधिदुग्धघृतमधुशर्करारव्यैः समंत्रैर्मध्येस्रुगंधजलप्लुतैः स्नापयेत् ततोविराट् सहस्रशीर्षा॰ अभित्वाशूरनो॰ पुरुषएवेदं॰ नत्वावां॰

इतिवस्तुःकृत्वाजपेत् मतिसपर्या चजलेनदेवस्यपादौनाभिवक्षः शिरश्चस्पृशेत् ततोलिंगमंत्रैः प्रार्थयित्वा भगवन्देवदेवेश धर्मकामार्थ
मोक्षद विद्याविद्येश्वरैरुद्रैर्गणेशैर्लोकपालकैः देवदानवगंधर्वैर्यक्षैश्चसहकिन्नरैः अस्मिन्लिंगेमहादेव सर्वदावससेप्रभो पुंसाम-
नुग्रहार्थायपृथिव्यांस्वेच्छयाप्रभो परावरेणभावेनस्थातव्यंसर्वदात्वया सर्वविघ्नहरःपुंसांसर्वदुःखहरःसदा सर्वदायजमानस्यइ-
च्छासंपत्करोभव नमस्तेसर्वधर्मायसंतोषविजितात्मने ज्ञानविज्ञानतृप्तायब्रह्मतेजोभिशालिने नमस्तेशब्ददेहायपुरुषायमहात्मने
स्थापकानांमूर्तिपानांशिल्पिनांचविभोसदा ग्रामदेशनृपाणांचशांतिर्भवतुसर्वदा पूजकाराधकानांचभक्तानांभक्तवत्सल सर्वेषांच
जगन्नाथरक्षासिद्धिप्रदोभव चंद्रार्कावनिपर्यंतंलिंगेऽस्मिन्परमेश्वर स्थातव्यंसुभयासार्धंसर्वलोकानुकंपया यावच्चंद्रश्चसूर्यश्च-
यावत्तिष्ठतिमेदिनी तावत्त्वयाऽत्रदेवेशस्थातव्यंस्वेच्छयाविभोइति ततःपुरुषसूक्तेनविष्णुंषोडशोपचारैःसंपूज्य पुराणमंत्रैर
न्यैर्वास्तुत्वानमेत् पुनःप्रार्थयेच्च ज्ञानतोऽज्ञानतोवापियावद्विधिरनुष्ठितः ससर्वस्त्वत्प्रसादेनसंप्राप्तोभवतान्ममेति शिवस्यापि ज्ञान
तोऽज्ञानतोवापिभगवन्यत्कृतंमया तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादाद्योस्सजेति अथकर्तृनामसुतंदेवनामकुर्यात् सर्वदाव्यवहारार्थंतच्चवि
ष्णोरमुकस्वामीअमुकनारायणइतिवा शिवस्यअमुकेश्वरः रवेरमुकादित्यः देव्याअमुकेश्वरी गणपतेरमुकविनायकइति अथनै-
मित्तिकेदोषेप्रायश्चित्तम् तत्रस्थाप्यमानदेवार्चालिंगंवायांयांदिशमुपाश्रयेत्तत्तद्दिगीशमंत्रेणाष्टोत्तरशतसंख्ययाशमीपलाशान्यत
मसमिद्धोमंतिलहोमंकृत्वा पूर्णाहुत्यंतंकुर्यात् दिगीशमंत्रास्तुत्रातारमिंद्रमित्यादयःप्रसिद्धाः अत्राचार्यदक्षिणाक्रमेणगजो-

मेषोमहिषोऽजः शक्तिर्मुक्ताफलंवस्त्रयुग्मं धेनुर्वृषभइत्यादिकास्तदभावेसुवर्णप्रतिकृतयः राजतोवावृषभइति ततःस्थाप्यमानेदेवे-
शब्दोत्थानेश्वक्षान्तेस्फुटितेवाशान्त्यर्थंमूलमंत्रेणाष्टोत्तरशतंहुत्वा प्रतिष्ठाहोमंकुर्यात् शिवायस्थिरोभवस्वाहा शिवायाप्रमेयोभ-
व॰ शिवायविबोधोभव ॰शिवायनित्योभव ॰ शिवायसर्वगोभव ॰ शिवायअविनाशोभव शिवायकृप्तोभवस्वाहेति अथसर्वशान्त्यर्थ-
मघोरमंत्रेणाष्टोत्तरशतंस्विष्टकृदंतंहुत्वा सर्वप्रायश्चित्तंचहुत्वा पूर्णाहुतिंहुत्वा ईशानेबलिंदत्वाचामेत् शोभमानासनेयजमानमु-
पवेश्याथर्वणसाम्नामंत्रांतरैश्चाभिषिंचेत् अथाचार्यपूजनं तच्चयजमानआचार्यमासनेउपविश्यसत्कृत्यग्रामगोसहस्रमर्धंतदर्धंवा
गोशतमर्धंवावृषमेकादशकंपंचकंसालंकृतंयथाशक्तिसन्निधायदेशकालौसंकीर्त्य देवप्रतिष्ठासिद्ध्यर्थमिमांदक्षिणांतुभ्यमहमा
चार्यायसंप्रददे नममेत्युक्त्वातद्धस्तेगोपुच्छादिसतिलकुशयवतुलसीसहितंजलंक्षिपेत् विज्ञापयेच्च भगवन्सर्वधर्मज्ञशिवशा-
स्त्रपरायण सर्वशास्त्रार्थतत्त्वज्ञशिवशास्त्रविशारद अनादिजन्मसंतानेत्यप्रमेयेभवार्णवे अद्यमेसफलंजन्मअद्यमेसफलंधनम्
अद्यमेजननोच्छित्तिरद्यमेपरमंपदम् मोचितोऽहंत्वयानाथदुश्छेद्याद्भवबंधनात् ईशानात्तस्त्वयायस्मादप्रमेयाद्भवार्णवात् मुक्तो
हंमर्त्यसंसारात्प्रपन्नोऽहंतवांतिकम् ज्ञानतोऽज्ञानतोवापि यन्न्यूनंयत्कृतंमया तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादात्समस्तमेइति गुरु
रपि समस्तजगदुत्पत्तिस्थितिसंहारकारकः शिवःशिवःसानुचरःसर्वदासर्वकामदः द्रव्यहीनंतुयत्किंचिद्विधिहीनंतुयद्भवेत्
तत्सर्वंपूर्णमेवास्तुप्रसादात्कारणस्यतु स्थापकस्यमूर्तिपानांशिल्पिनांवर्णिनांतथा सराष्ट्रपार्थिवानांचशांतिर्भवतुसर्वदा मृत्य-

पुत्रकलत्रैश्वस्वमित्रबलवाहनैः कारणस्यप्रसादेनसर्वलोकेश्वरोभवेत्युक्त्वायजमानायाशिषंदद्यात् ततःस्थापकमूर्तिपजापिनः
ऋत्विक्स्थपतिदैवज्ञान् संपूज्य तेभ्यःशक्तितोदक्षिणांदद्यात् अधिवासनसद्योबहुकालसाध्यंवा तत्रसद्यःपक्षेवक्ष्यमाणमधुकुंकुमा
दिसर्वद्रव्यैस्तद्दिनएवदेवंलेपयेत् अन्येतुप्रथमेऽह्नि कुंकुमेनदेवंलेपयित्वापूजयेत् द्वितीयदिनेहरिद्रासिद्धार्थकचूर्णेन एवंतृती
यदिनेपिष्टसितचंदनयवचूर्णेन चतुर्थदिनेमनःशिलाप्रियंगुचूर्णेन सर्वलेपनद्रव्येषुकपिलाघृतमिश्रणंज्ञेयम् प्रतिमानांलेपत्रयं
दिनत्रयेक्रमेणकृत्वा शेषलेपांश्चतुर्थदिनेयुगपत्कृत्वा त्रिसंध्यंबलिदानंचनिर्वर्त्य प्रतिकुंडेहवनंसंपादयेत् शांतिहोमंचऋत्विजःकु
र्युरित्यनेकदिननिर्वर्त्येऽधिवासनेज्ञेयम् शिवस्यतुयदाप्रतिष्ठोत्तरकालंसप्तसुदिनेषुमधुकुंकुमादिलेपाःक्रियंते तदा अष्टमदिनेस्न
पनार्चनादिर्महानुत्सवोविधेयइतिसर्वदेवप्रतिष्ठापनविधिः अथचतुर्थीकर्म तच्चतुर्थदिनेद्वितीयदिनेवाकुर्यात् तत्रप्राग्वद्देवाचार्योमू
र्तिपयजमानद्वारपालादिभिः सहमंडपंपश्चिमद्वारेणप्रविश्य तत्रमहास्नानसंभारादिकमुपकल्प्य वेद्याःप्रादक्षिण्येन कुंडेस्थापितदै
वत्यंचरुंश्रपयित्वा पंचब्रह्मभिरंगसहितैः सहस्राहुतिहोमंकुर्यात् ब्रह्ममंत्रायथा ईशानःसर्वविद्यानां० तत्पुरुषायविद्महे० अ
घोरेभ्योऽथघोरेभ्यो० वामदेवायनमोज्येष्ठायनमो० सद्योजातंप्रपद्यामीतिप्रागुक्ताअंगमंत्रा अपि अद्भ्यःसंभूतः० वेदाहं० प्रजापतिः
योदेवेभ्य० ऋचंब्राह्ममिति ततऋत्विजोऽप्येतेनतिलैर्वास्वकुंडेशतंहुत्वागौरीर्मिमायेतिमंत्रेणजुहुयुरिति शिवस्यचतुर्थीकर्म एवम
न्यदेवविषयेपि पूर्ववत्स्थापितदैवत्यंचरुंश्रपयित्वा स्वमंत्रैः पत्नीमंत्रैश्चसहस्रंहोमंकुर्यात् ऋत्विजोपिएतेनशतंशतंप्रतिकुंडेहु-

त्वा पूर्णाहुतिंजुहुयुः गुरुश्चशालितोयेनमूर्तिंसिक्त्वा निर्माल्यमपसार्य पुनः पूजयित्वा एकाशीतिपदान्पूर्ववत्संस्थाप्यस्नापयेदिति
यद्वापुराणांतरोक्तप्रकारेण पूजयेत् तत्रदध्यक्षतकुशाग्रक्षीरदूर्वामधुयवसिद्धार्थकपुष्पफलतोयान्वितमर्घ्यपात्रमासाद्यकलशाष्टसह-
स्रमष्टशतमष्टौचतुरोवाकलशान्सौवर्णान्राजतान्ताम्रान्रीतिकमयान्मृन्मयान्वोपकल्प्य तेषुशंनोदेवीरापोहिष्ठेतिमंत्रैरुत्तमंतीर्थज
लंप्रक्षिप्य मृद्गोमयक्षीरदधिमधुघृतशर्करौषधिपुष्पफलकुशरत्नगंधपंचगव्यादिकंप्रक्षिप्य ततः समुद्रंवः प्रहिणोमीतिमंत्रेणदेवाया
र्घ्यंसमर्प्य स्नापयेत् तद्यथा पंचनद्यइतिपंचगव्येन दधिक्राव्णइतिदध्ना आप्यायस्वेतिक्षीरेण तेजोसीतिघृतेन मधुवातेतिमधुना
देवस्यत्वासरस्वत्यैभैषज्येनेतिपुष्पोदकेन परिवाजपतिरितिरत्नोदकेन देवस्यत्वेतिकुशोदकेन अग्नआयाहीतिफलोदकेन समुद्रज्येष्ठा
इतिपूर्वकल्पितशीतजलेन वासोःपवित्रमसीतिसहस्रधाराकुंभेन ततः तूष्णींस्नपनम् ततः अंधस्याधोवोइतिपंचवर्णसूत्रेणनीराज्य
बलिंहरेत् मुंचंतुमाशपथ्यादितिकौतुकंविसृज्य सुगंधवस्त्रेणपंचनद्यइतिदेवंपरिमार्ष्टि मंदाकिन्यास्तुयद्वारिसर्वपापहरंशुभम्
तदिदंकल्पितंदेवसम्यगाचम्यतांत्वयेति आचमनीयंनिवेदयेत् देवसूक्तसमायुक्तेसर्वयज्ञसमन्विते सर्ववर्णप्रदेदेववाससीप्रतिगृ-
ह्यताम् इतिवस्त्रयुग्मंनिवेदयेत् शरीरंतेनजानामिचेष्टांनैवचनैवच मयानिवेदितंभक्त्याचंदनंप्रतिगृह्यतामितिकुंकुमकर्पूरयुक्त
चंदनचर्चितम् मणिमुक्ताप्रवालाद्यैःस्वर्णपुष्पैर्मयाकृता पूजातुदेवदेवेशप्रसादाद्भवतस्तवेतिपुष्पंनिवेदयेत् वनस्पतिरसेतिधूपंनिवे
दयेत् त्वंचंद्रस्त्वंरविर्विष्णुस्त्वंरत्नानिहुताशनः त्वमेवसर्वज्योतींषिदीपोयंप्रतिगृह्यताम् इतिदीपंमंत्रः अशीत्याचत्वारिंशतावादीपै-

रार्तिकं अन्नंचतुर्विधमितिनैवेद्यं संभूषायेनिभूषणानिदत्वा पूर्वकृतंहोमंनिवेद्य प्रार्थयेत् यन्मयाभक्तियोगेनपत्रंपुष्पंफलंजलम्
आवेदितंचनैवेद्यंतद्गृहाणानुकंपया मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर यत्पूजितंमयादेवपरिपूर्णंतदस्तुमेइति ततःपुनरष्टोत्तरस
हस्रंमूलमंत्रेणहुत्वागानांदशांशेनपूर्णाहुत्यंतंकृत्वा स्वस्तिवाचनंकारयित्वा इंद्रादिभ्योबलिंदत्वाचभ्यशेषंसमापयेदितिचतुर्थीकु-
र्मविधिः अथशैवेचंडपूजा चतुर्थीकर्मदिनेदिनांतरेवा अमुकलिंगप्रतिष्ठांगतयाचंडप्रतिष्ठांकरिष्ये इतिसंकल्प्य प्रासादाद्बहिर्ग-
र्भगृहार्धसूत्रांतराले ईशान्यांचंडंस्थापयेत् पीठादौचंडमूर्तिंसंस्थाप्यपूजयेत् तत्रध्यानं रुद्राग्नेःप्रभवंचंडंकज्जलाभंभयानकम्
शूलदंडधरंरौद्रंचतुर्वक्त्रंचतुर्भुजं सुखोद्गीर्णंमहाज्वालंरक्तद्वादशलोचनम् जटामुकुटखंडेंदुमंडितंफणिकंकणम् व्यालयज्ञोपवी-
तंचमाक्षसूत्रकमंडलुं श्वेतपद्मासनासीनंभक्तिप्रव्हार्तिनाशनमित्येवंध्यात्वा ओंचंडासनायनमः ओंचंडमूर्तयेनमः ओंधूर्जिनिचं-
डेश्वरायस्वाहेतिमंत्रेणावाह्य ओंचंडहृदयायहुंफट्नमः ओंचंडशिरसेहुंफट्नमः ओंचंडशिखायैहुंफट्नमः ओंचंडकवचाय
हुंफट्नमः ओंचंडअस्त्रायहुंफट्करयोरस्त्रं ओंचंसद्योजातायहुंफट् ओंचिंवामदेवायहुंफट् ओंचुंअघोरायहुंफट् ओंचेंतत्पुरुषा
यहुंफट् ओंचोंईशानायहुंफट् इतिन्यासंकृत्वाषोडशोपचारैःपूजयेत् यावत्तिष्ठतिलोकेऽस्मिन्देवदेवोमहेश्वरः तावत्कालंत्वया-
देवस्थातव्यंशिवसन्निधौइति ततोदिग्बलिंकृत्वाभूतानिविज्ञापयेत् यथा यावत्कालंमहादेवोलिंगमाश्रित्यतिष्ठति तावत्कालंतुरः-
क्षार्थंभूयंतिष्ठतसर्वदेति ततोगुरुःकर्मशेषंसंपाद्यभद्रासनेयजमानमुपवेश्याभिषिंचेत्तत्रदेवस्यत्वेति॰ शंनोदेवीः॰ अथर्वणस्तापं-

स्रुतास्त्वित्यादयोमंत्राः यजमानोमहाजलाशयेअवभृथस्नानंकृत्वा मंडपमागत्यगुर्वादीन्संपूज्य हिरण्यगर्भेति दक्षिणांदत्वा सोप
स्करांपयस्विनींगांचदद्यात्गुरुश्च समस्तजगदुत्पत्तिस्थित्यनुग्रहकारकः शिवःसानुचरःस्तात्तुः सर्वदासर्वकामदइतिमंत्रेणाशिषोद
द्यात् यथाशक्त्याब्राह्मणभोजनम् क्वचिच्चंडोनास्तीतित्रिविक्रमः बाणलिंगेचलोहेचसिद्धेलोहेस्वयंभुवि प्रतिमासुचसर्वासुन
चंडोधिकृतोभवेदिति इतिचंडपूजा अथचलप्रतिष्ठाबोधायनाद्युक्ता तत्रशस्तेदेशेमंडपंतदंतःप्रतीच्यामुदीच्यामीशान्यांवाकुंडंत
दुत्तरतःस्नानोपकरणानि नैर्ऋतेवास्तुमंडलंमध्येवेद्यांसर्वतोभद्रमंडलं तदुत्तरेस्वस्तिकोपरिशय्यास्थानंचकृत्वा पूर्वदिनेवाप्रतिष्ठादि
नेवागणपतिपूजापुण्याहवाचनंकृत्वा मातृकापूजनाभ्युदयिकश्राद्धानिकृत्वा गुरुमष्टौचतुरोवाऋत्विजश्चवृत्वापूजयेत् ततोगुरुःमं
डपप्रतिष्ठामग्निस्थापनंकृत्वा स्थाप्यदेवत्यनैवारंचरुंश्रपयित्वाज्यभागांते पलाशसमिद्भिः प्रत्येकमष्टसहस्रमष्टशतंवाप्रतिदेवंचलोक
पालमंत्रैर्व्याहृतिभिर्वाजुहुयात्तावत्संख्याकमाज्यहोमंचकृत्वास्थाप्यदेवताकमंत्रेणसमित्तिलाज्यानांप्रतिद्रव्यंदशाहुतीःस्विष्टकृतंच
हुत्वाअष्टसहस्रमष्टशतंवास्थाप्यदेवतामंत्रेणजपेत् अथयजमानोगुरवेवरंदद्यात् ततोगुरुर्देवंपंचगव्यैःपंचामृतैश्चपृथक्तत्तन्मंत्रैः
शंनोदेवीतिसंस्नावकलशेनसंस्नाप्य क्षीरवंडिनाद्यैरनुलिप्योष्णोदकेनप्रक्षाल्य पुनःचतुर्भिःकलशैःसमुद्रज्येष्ठाइत्यादिअभिषेकमंत्रैः
चतुर्भिःक्रमेणाभिषिंच्य भद्रपीठेनिवेश्याष्टौकलशान्तोयपूर्णान्पूर्वादिक्रमेणसंस्थाप्य सप्तमृदःपल्लवानकुशान्शांत्युदकंप
ञ्चरत्नान्यवकुम्भान् — स्नपणोदकंयवान्पुष्पाणिफलानिचक्रमेणनिक्षिप्य स्थापनक्रमेणकुंभैःस्नापयेत् तत्रमंत्राः आपोहिष्ठेतितिसृभिः हिरण्यवर्णाः

शुचयइतिचतुष्टयं पावमानः स्ववर्जनइत्यनुवाकेन संस्नाप्याहतेनवाससीपरिधाप्योपवीतं दत्वा गंधपुष्पधूपदीपैः संपूज्य हिरण्यगर्भइ
तिअष्टभिः पैष्टैरष्टभिर्दीपैर्नीराज्य हिरण्यशलाकां गृहीत्वा चित्रंदेवानामित्यर्धेन देवनेत्रेउन्मील्यांजनिष्ठामध्वरंइति अंजनेनांजयि
त्वा पुनर्मधुघृतशर्कराभिर्देवस्यत्वेतिजपेत् मंत्रांते अनर्घ्यमितिवाक्यशेषः ततोभक्ष्यभोज्यादर्शादिदर्शयेत् तदाग्रेकोपिनतिष्ठेत्
ततोदर्भेष्वासीनोदर्भान्धारयमाणः पुरुषसूक्तेनस्तुत्वा वंशपात्रेपंचवर्णान्वितमन्नंप्रक्षिप्य देवंनीराज्य भूताधिपतयेदीपमूलधरा-
यमापतयेसर्वविद्याधिपतयेरुद्रायनमः शिवमगर्हितंकर्मास्तुस्वाहेतिबलिंदत्वाचामेत् ततोमंडलदेवतागंधादिनासंपूज्य स्थाप्यदेवं
तत्तल्लिंगमंत्रैरावाह्यकर्णिकायांप्रतिष्ठाप्य गंधाद्यैः संपूज्य कुंडेमंडले देवतामंत्रैर्दशदशतिलाहुतीर्हुत्वा शय्यायांदेवमारोप्य पुरुषसू
क्तोत्तरनारायणाभ्यांब्राह्मणैःसहोपतिष्ठेत ततोदेवेपुरुषात्मनेनमः प्राणात्मनेनमइतिशरीरेव्यापकंन्यसेत् प्रकृतितत्वायनमोहृदि
रसनतत्वायनमोबस्तौ गंधतत्वायपादयोः श्रोत्रतत्वायकर्णयोः त्वक्तत्वायसर्वशरीरे चक्षुस्तत्वायचक्षुषोः जिह्वातत्वायजिह्वायां घ्रा
णतत्वायघ्राणे वाक्तत्वायवाचि पाणितत्वायपाण्योः पादतत्वायपादयोः पायुतत्वायपायौ उपस्थतत्वायोपस्थे पृथ्वीतत्वायपादयोः
अप्तत्वायबस्तौ तेजस्तत्वायहृदि वायुतत्वायघ्राणे आकाशतत्वायशिरसि रजस्तत्वाय तमस्तत्वाय सत्वतत्वाय देहतत्वायेनिर्देहे त-
तोपिपुरुषसूक्तन्यासंकृत्वासंपूज्याधिवासयेत् ततोमंडलशय्ययोर्मध्येनगंतव्यम् मंडलदेवतानामुपहारनिवेदनं तत्रसर्वान्नंब्रह्मणे
घृतान्नंसोदकंइंद्राय आज्यान्नमग्नये माषान्नंयमाय कृष्णव्रीह्यन्नंसघृतंनिर्ऋतये नवनीतोदनंवरुणाय यवोदनंवायवे प्रियंगवंसोमा

य गावेधुकमीशानाय पायसं वा सर्वेभ्यः ततः शय्याप्रवेशनैवारं चरुं स्थापयित्वा तेन दिग्बलिं दत्त्वा निशां नयेदित्यधिवासनं प्रातररुणो
दये देवमुत्थाप्य मूलमंत्रेणोपस्थाय घृतेन चरुं श्रपयित्वाऽभिघार्य मूलमंत्रेणाष्टोत्तरसहस्रमष्टशतं वा हुत्वा अग्नये स्वाहा सोमाय स्वाहा
धन्वंतरये स्वाहा कुह्वै स्वाहा अनुमत्यै प्रजापतये परमेष्ठिने ब्रह्मणे अग्नये सोमाय अग्नयेऽन्नादाय अग्नयेऽन्नपतये प्रजापतये विश्वेभ्यो दे
वेभ्यः सर्वेभ्यो भूतेभ्यः भूर्भुवः स्वः अग्नये स्विष्टकृते स्वाहेति जुहुयुः ततो यजमानो गुरवे वरं दद्यात् ततः उदिते सूर्ये गुरुर्वेद्यामेव देवमभि
मुखं कृत्वा रत्नपुष्पमूलफलौषध्यादि दर्शयित्वा ताम्रपात्रे शांतिजलमादाय मूलमंत्रेण शतवारमभिमंत्र्य देवशिरसि अभिषिच्योत्तिष्ठ ब्र-
ह्मणस्पते इत्युत्थाप्य विश्वतश्चक्षुरित्युपस्थाय देवस्य पुरस्तात् ओं ब्रह्मविष्णुरुद्रेभ्यो नमः दिक्पालेभ्यो नमः वसुभ्यो नमः रुद्रेभ्यो॰
आदित्येभ्यो नमः अश्विभ्यां॰ मरुद्भ्यो॰ कुबेराय॰ गंगादिमहानदीभ्यो॰ अग्नीषोमाभ्यां॰ द्यावापृथिवीभ्यां॰ इंद्राग्निभ्यां॰ धन्वंतरये॰
सर्वेशाय॰ विश्वेभ्यो देवेभ्यो॰ ब्रह्मणे नम इति जपित्वा देवस्य पुरतो यजमानमभिषिंच्य देवमंत्रं जप्त्वा ध्रुवसूक्तेन तल्लिंगमंत्रेण पुरुषसूक्तेन
गायत्र्यान्यास्तुतिभिर्देवं प्रतिष्ठाप्य प्रतिमायां निजवाहनायुधपरिवारादिकं ध्यात्वा पुनः पूजयित्वा मुद्रां प्रदर्श्य मूलमंत्रमष्टोत्तरशतं जप्त्वा
स्तुत्वा नत्वाचम्य स्विष्टकृदाद्युत्तरांगाणि समापयेत् ततो यजमानो दक्षिणां दद्याद्ब्राह्मणांश्च भोजयेद्यथाशक्ति इति चलार्चाप्रतिष्ठा अ
थ जीर्णोद्धारविधिः अग्निपुराणे जीर्णादीनां च लिंगानां समुद्धारविधिं मान्वदेव लक्ष्मोज्झितं च भग्नं च स्थूलं वज्रहतं तथा संपुटं स्फुटितं व्यंगं
लिंगमित्येवमादिकम् वदेदिति दुष्टलिंगानां त्याज्यत्वम् लक्ष्मोज्झितं बाणादिक्रमेण तद्विधिना स्थापितं तल्लक्षणरहितम् भग्नमनेकशकली

घृतं स्थूलंपिंडिकाननुरूपम् वज्रहतंविद्युद्धृतं संपुटंन्युब्जं स्फुटितमेकदेशेभग्नं व्यंगंपिंडिकाप्र णालारहितं आदिपदेनचांडालस्प
ष्टादीनांग्रहणं पिंडीवृषयोर्दुष्टत्वेतयोरेवत्यागोनलिंगस्य चालितंचलितंनिम्नमत्यर्थंविषमस्थितं दिङ्मूढपतितंलिंगंमध्यस्थंपाति
तंतथा एवंविधंचसंस्थाप्यंनिर्व्रणंचभवेद्यदि नादेयनप्रवाहेणतदपाक्रियतेयदि ततोन्यत्रापिसंस्थाप्यंविधिदृष्टेनकर्मणेति निम्नंसा
मंतंभूभागान्निम्नायांभुविव्यवस्थितं विषमस्थितंयत्रपूजादिकर्तुंनशक्यतेतस्मिन्देशेव्यवस्थितंदिङ्मूढंविशेषविध्यभावेपिउदगतिरि-
क्तदिक्प्रणालीकंपतितंगर्तादौ मध्यस्थंसंपूर्णपिंडिकाश्वभ्रंतगतंप्रासादमध्यभागेस्थितमित्यपिकेचित् एवंविधमित्यन्येलक्ष्मोज्झित
भग्नस्फुटितविद्धत्यतातिरिक्तानांग्रहणम् तेनेजघन्योनिर्व्रणशब्दोपिलक्ष्मोज्झिताद्यतिरिक्तानामेवोपलक्षकः पीठाच्चचालितंलिंगंनिर्दो
षंतुभवेद्यदि ततोपिस्थापयेत्तत्रजपेल्लक्षमघोरकम् त्यजेत्सर्वाचितंलिंगंश्वपचाद्यैश्चसेवितम् लिंगांतरंप्रतिष्ठाप्यविशुद्धिमाधिगच्छति
इतिसिद्धांतशेखरोक्तेः तत्रैव लिंगादीनांचजीर्णानां प्रोच्यतेविधिरुत्तमो सर्वारिष्टविनाशार्थंसर्वप्राणिहितार्थकः लिंगस्यपिंडिका-
याश्चप्रतिमासुखलिंगयोः सर्वेषांपरिवाराणांहर्म्यप्राकारयोस्तथा उद्धारश्चावृत्तिःप्रोक्ता ।थोत्थारेहेतुरुच्यते आवृत्तिःपुनःसंस्कारः
स्फुटितेखंडितेभग्नेदग्धेवाशनिनाग्निना उन्मत्तैःशत्रुभिश्चोरैःकरिणास्रोतसाहते लिंगेपीठादिकेचापिविशीर्णेकालपर्ययात् देहंजी
र्णंयथादेहीत्यक्त्वान्यदुपगच्छति लिंगादीन्यपिजीर्णानितथामुंचतिदैवतं खंडितंचूर्णितंलिंगंप्रेताद्याआश्रयंतियत् लिंगाद्यसुत्वसू
न्यत्वात्तथाचब्रह्मराक्षसाः कुर्वुर्नृपाणांराष्ट्रस्यतद्ग्रामस्यविशेषतः पीडांकुर्वंतितेत्युग्रांदुर्भिक्षमरणादिकम् तस्मात्सर्वप्रयत्नेनकु-

र्णोद्धारणक्रियाम् स्वायंभुवेचालिंगेचबाणलिंगेतथैवच ऋषिभिश्चासुरैर्देवैस्तत्त्वविद्भिः प्रतिष्ठिते लिंगेजीर्णादिदुष्टेपिनोद्धारंतत्रका
रयेत् इदमपिस्वायंभुवादिव्यक्तिविषयं नतुदेवान्तद्व्यक्तिनाशेनतत्स्थानस्थापितेदानींतनतादृशव्यक्तिविषयम् स्वायंभुवादिलिंगानांजी
र्णपीठंपरित्यजेत् उक्तैर्जीर्णादिभिर्दुष्टंमानुषंतुपरित्यजेत् द्विखुंडपतितंस्थानान्मध्यस्थंस्रोतसाहृतम् चोराद्यैश्चालितंलिंगंस्थापयेन्नि
र्व्रणंपुनः लोहाद्यंछिन्नभिन्नांगंसंधायस्थापयेत्पुनः सुवर्णाद्यष्टलोहनिर्मितंलिंगंदेवाङ्गभग्नंसत्तद्वसज्जंकृत्वापुनःस्थापयेदित्यर्थः
बाहुपादशिरोहीनाकर्णनासास्यहीनका तादृशींपरिवाराणांप्रतिमांपरिवर्जयेत् यद्द्रव्यंयत्प्रमाणंचलिंगंवाप्रतिमापिवा तादृक्कृतेनैवन-
मानेनतद्द्रव्येणप्रकल्पयेत् कारयेन्नान्यमानेननान्यद्रव्येणतत्पुनः नान्याकारंचनान्यत्रस्थापयेत्तदुरूत्तमः स्रोतसापहृतंलिंगंप्रासादेवा
तदन्यतः तत्समीपगतेदेशेस्थापयेद्बाधवर्जिते प्रासादपतितेहर्म्येगोपुरेमंडलादिके तदाकारंचतद्द्रव्यंतन्मानंतत्रकारयेत् कूर्मपो-
न्याः शिलाग्राल्याहृढकाश्चतथाविधाः हीनद्रव्यकृतंकर्मश्रेष्ठैर्द्रव्यैःसमाचरेत् हीनंवाप्यधिकंमानमाकारंवानकारयेत् एवमुक्तेनमा-
र्गेणदोषैरुक्तैर्विचार्यच लिंगपीठादिकंजीर्णंतदुत्थारंतथाचरेत् तिथिनक्षत्रवारादितदर्थंनविचारयेत् जीर्णंनोद्धारयेद्विद्वान्जीर्णंनैव
चालयेत् तस्मान्नधारयेज्जीर्णमजीर्णंरक्षयेद्बुधः सुस्थितंदुस्थितंवापिशिवलिंगंनचालयेत् शतेनस्थापनंकुर्यात्सहस्रेणतुचालयेत्
अस्यश्लोकस्यवाक्यार्थोवर्ण्यतेत्ययथागमं नित्यपूजादिभिर्युक्तंजीर्णाद्यमपिसुस्थितं हीनंपूजादिभिर्लिंगमजीर्णमपिदुःस्थितम् देवता
स्थापितंमोहाद्यदिनिम्नत्वमागतम् तल्लिंगंदुःस्थितंवापितत्त्वज्ञैरितिनिश्चितं सहस्रादिकहोमेनतस्यचालनमीरितं स्थापनंशतहोमेन

तस्यलिंगस्यचोदितं एवंबहुविधैस्तैर्दोषाश्चबहुधोदिताः परीक्ष्यबहुधातांश्चजीर्णलिंगंसमुद्धरेत् हयशीर्षागमेपि जीर्णोद्धारविधिं-
कृत्स्नंसंक्षेपात्सब्रवीमिते चालितापाटिताभूमिःकेनचित्तापकर्मणा चंडालपतितस्पर्शदूषितावन्हिनाचया स्वपमापतिताजीर्णान
द्विवेगादिपातिता अपुण्यजलसंस्पृष्टाविप्रक्षतजदूषिता पतिताध्यर्चिताश्लेष्माविपमूत्रादिविदूषिता सव्रणालक्षणोपेतासंस्कार्यादेशि
केनतु भूमिर्लिंगमीश्वरप्रतिमाच्चचंडालपतितस्पृष्टाः असंस्पर्शोनिषिद्धस्पर्शः जीर्णाकालबाहुल्येनक्षारादिसंबंधेनवविशीर्णा सव्रणा
एकदेशेनभग्नादेशिकउपासकः पूर्वोक्तेनविधानेनवैदिकेनसुरोत्तम अचलाद्दूषितामेवस्थापयेद्विधिनोद्धृतां पूर्वोक्तेनचलार्चाप्रतिष्ठा-
प्रकारेणएवंविधेनोद्धृताऽपीत्यन्वयः वक्ष्यमाणप्रकारेणोद्धृतामित्यर्थः पूर्वपीठंपरित्यज्ययदन्यमपितद्गतं ततोयथोक्तविधिना प्रासा
देसन्निवेशयेत् दुष्टपूर्वासनंपरित्यज्यान्यस्मिन्प्रासादगत आसनेयथोक्तेनाचलार्चास्थापनप्रकारेणपुनःस्थापयेदित्यर्थः अतिजीर्णां-
तथाव्यंगांदारवींशैलजामपि परित्यज्यन्यसेदन्यांपूर्वोक्तविधिनागुरुः संहारविधिनातत्रमंत्रान्संहृत्यदेशिकः सहस्रंनारसिंहेनहुत्वा-
तामुद्धरेद्गुरुः संहारविधिःप्रातिलोम्येनमंत्रान्कलाःसंहृत्योद्धृत्यनारसिंहेननृसिंहमंत्रेण होमद्रव्यमाज्यमन्यानादेश्यात् वृषसंयो-
जयित्वातुमंत्रेणोद्धृत्यदेशिकः दारवींदाहयेद्वन्हौशैलजांप्रक्षिपेज्जले धातुजांरत्नजांचापिप्रक्षिपेन्मकरालये अगाधेचान्यतोयेवा
क्षिपेन्नद्यांमहाजले वृषवृषोत्थरज्ज्वासंयोज्यमंत्रेणपाशुपतेनोद्धृत्यहयेदितित्रिविक्रमः यानमारोप्यजीर्णांवाच्छाद्यवस्त्रादिनागुरुः शंखदुंदु
भिनिर्घोषैर्गीतवादित्रनिःस्वनैः नीत्वागाधंजलंरम्यंभागीरथ्यामहार्णवे विष्वक्सेनायवीर्येणप्रक्षिपेत्तांततोगुरुः यानमारोप्येत्यादि

पूर्वोक्त एवप्रतिपादनइतिकर्तव्यतोक्तयर्थम् विष्वक्सेनोद्देशेनवीर्येणबीजेनगुरुर्भागीरथ्यादिजलेतांप्रतिमांक्षिपेदित्यर्थः रत्नानिक्षिप्ता
न्यादायस्वयंदद्याच्चदक्षिणांधेनवोदशवा पंचस्वर्णवस्त्राद्यलंकृताः जीर्णोद्धारेप्रदातव्यागुरवेविष्णुतुष्टये लिंगांतर्निक्षिप्तानिर
त्नान्यादाय स्वयंयजमानोदशधेनूःपंचवाहेमवस्त्राद्यलंकृता गुरवेदक्षिणांदद्यादित्यर्थः भोजनीयाविष्णुभक्ताःदेयमन्नमवारितम् त्रिरात्र
मुत्सवःकार्यःपंचसप्ततथापिवा बलिश्चविधिनादेयायथोक्तेनक्रमेणतम् यथोक्तेनचलार्चाप्रतिष्ठाप्रकारेण ततोनिवेदयेदन्यांप्रतिमांल
क्षणान्विताम् निवेदयेत्स्थापयेत् तत्क्षणादेवराजेंद्रतस्यदोषस्यशांतये संपत्तिर्वाविपत्तिर्वानापेक्ष्यांतत्रकारयेत् अपास्यपिंडिकांपू
र्वामन्यांतत्रनिवेशयेत् यद्द्रव्याययत्प्रमाणाच्चयामूर्तिश्चोद्धृताहरेः तद्द्रव्यात्तत्प्रमाणाच्चसामूर्तिस्तत्रकीर्तिता यत्प्रमाणंयदाकारंयन्मयं-
बिंबमुद्धरेत् तत्प्रमाणंतदाकारंतन्मात्रंतत्रविन्यसेत् विहायपिंडिकांपूर्वांतद्दिनेचापरांन्यसेत् द्वितीयेवातृतीयेवादिवसेस्थापयेद्धरिम्
अतऊर्ध्वंभवेद्दोषोविधिनापिनिवेशिते अनेनैवविधानेनलेप्यादींस्तुविवर्जयेत् कुड्यलिखिताः प्रतिष्ठापिताः प्रतिमालेख्याः अन्यादृक्क-
ल्पयेत्तत्रतत्प्रमाणंतदाकृति एषसंक्षेपतःप्रोक्तोजीर्णोद्धारविधिस्तव सर्वेषामेवदेवानांनृपःसाधारणःस्मृतः योजीर्णविधिनाबिंबं-
संस्कुर्यान्मानवोभुवि फलंदशगुणंतस्यमूलान्नास्त्यत्रसंशयः वापीकूपतडागानांक्रमरथान्नांसदानय प्रतिमानांसभानांचसंस्कर्ता-
योनरोभुवि पुण्यंशतगुणंतस्यभवेन्मूलान्नसंशयः संशयोत्रनकर्तव्योजीर्णसंस्कारकर्मणि मूलाद्दशगुणंप्रोक्तंपुण्यंकूपेप्रतिष्ठिते-
प्रतिमायांशतगुणंकूपादेःपरिकीर्तितं प्रतिमादेर्दशगुणंजीर्णसंस्करणाद्भवेत् कूपप्रतिमयोर्दशगुणशतगुणयोरल्पत्वमहत्वापे

क्षयाव्यवस्था अग्निपुराणे सुस्थितंदुःस्थितंवापिशिवलिंगंनचालयेत् शतेनस्थापितंकुर्यात्सहस्रेणतुचालनम् पूजादिभिश्चसं
युक्तंजीर्णाद्यमपिसुस्थितम् पूजयारहितंयत्तद्दुष्टमपिदुःस्थितम् अयंचालननिषेधोविधातिरेकेणशतसहस्रसंख्येनूक्तसंख्यय
त्वाद्गोगते गोश्वाश्वाश्चेत्यत्रेवबहूपकारित्वाद्यैःसहस्रंशताश्वमित्यादौ बाहुल्येनदर्शनाच्चेतिन्यायविदः सिद्धांतशेखरेतुहोमगते
असंख्येत्युक्तं यदपितत्रैव असुरैर्मुनिभिर्देवैस्तत्त्वविद्भिःप्रतिष्ठितम् जीर्णंवाप्यथवाभग्नंविधिनापिनचालयेदिति तदसुरादिप्रति-
ष्ठापिततद्व्यक्तिविषयम् नतुदैवात्तद्व्यक्तिनाशेनतत्स्थानस्थापितेदानींतनतादृशव्यक्तिविषयम् जीर्णोद्धारप्रकारोप्यत्रैव- याम्येमंड
पमीशेवाप्यात्यग्द्वारेकृतोरणम् विधायद्वारपूजादिस्थंडिलेसंप्रपूजयेत् द्वारपूजादिशिवकुंभपूजांतमितित्रिविक्रमः मंत्रान्संतर्प्यसंपू
ज्यवास्तुदेवास्तुपूर्ववत् दिग्बलिंचबहिर्दत्वासमाचम्यस्वयंगुरुः ब्राह्मणान्भोजयित्वातुशंभुंविज्ञापयेत्ततः दुष्टलिंगमिदंशंभोशांतिरुद्ध
रणस्यचेत् रुचिस्तवास्तेविधिनाअधितिष्ठचमांशिव एवंविज्ञाप्यदेवेशंशांतिहोमंसमाचरेत् मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकंशतम्
ततोलिंगंचसंस्थाप्यपूजयेत्स्थंडिलेतथा लिंगंलिंगाधिष्ठितदेवतांस्थंडिलेसंस्थाप्येत्यर्थः ओंव्यापकेश्वरायेतिनाम्नाऽनेनशिवार्चनम् ओं
व्यापकेश्वरायतद्ध्यायनेमइत्याद्युत्थम् अंगमंत्राः ततस्तत्राश्रितंमंत्रंश्रावयेदस्त्रवंधतः सत्वःकोपीहयःकश्चिल्लिंगमाश्रित्यतिष्ठति लिंगंत्यक्त्वा
शिवाज्ञाभिर्यत्रेष्टंतत्रगच्छतु विद्याविद्येश्वरैःशंभुःशंभुरत्रभविष्यति सहस्रंप्रतिभागंचततःपाशुपतास्त्रतः हुत्वाशांत्यंबुनाप्रोक्ष्यपश्चा-
त्कुर्याज्जपंततः ब्रह्मशिलापिंडिलिंगात्मकदेवताभागत्रयसंस्कारार्थंपाशुपतास्त्रेण शांतिकलशोदकेन देवंसंप्रोक्ष्य कुशैःस्पृष्ट्वाहोम-

संरक्षपाशुपतमंत्रंजपेत् दत्वार्घ्यंचविलोमेनतत्वतत्वकांस्ततः मूर्तिमूर्तीश्वरान्लिंगेपिंडिकासंस्थितान्गुरुः विसृज्यस्वर्णपा
शेनहृत्पस्कंधस्थयातया रज्ज्वावबध्वातयानीलाशैवमंत्रंगृणन्शनैः तज्जलेनिक्षिपेन्मंत्री तृप्त्यर्थंजुहुयाच्छतम् रक्षांविधायतद्धाम्नि-
महापाशुपतास्त्रतः लिंगमन्यच्चतत्रस्थंस्थापयेद्विधिवद्गुरुः विलोमेनपराङ्मुखसंज्ञकंतत्वनतत्वज्ञकंतत्वतत्वाधिपमूर्तिमूर्तीश्वराव
क्ष्यंते सिद्धांतशेखरे जीर्णोद्धारविधिंवक्ष्येसमासात्तत्रचोदितम् ईशान्यांदक्षिणेचापिमंडपंपश्चिमामुखम् कुर्वीतपूर्ववत्सर्वमेका
स्यंचैवतोरणम् पूर्ववत्सर्वकुंभादि द्वारपालार्चनंकुर्यात्स्थंडिलेग्नौशिवार्चनम् द्वारपालार्चनंमंडपप्रतिष्ठाप्रकारेण मंत्राणांतर्पणंकुर्या
द्वास्तुदेवार्चनंतथा मंत्राणांदेवस्थापितकलानांअंतर्बहिर्बलिंदद्यात् शिवभक्तांश्चभोजयेत् शिवभक्तान्पंच्यातित्रिविक्रमः द्वि
जान्कर्मकरादींश्चवतोविज्ञापयेच्छिवं दोषैर्लिंगमिदंदुष्टं शांतिरस्त्वस्यचोद्धृतौ तस्मादेवंविधानेनत्याधितिष्ठमहेश्वर भवत्वितिव
चस्तेनप्रोक्तंतद्भावयेद्गुरुः नेनशिवेनप्रोक्तंशांतिर्भवेत्विति वचोगुरुर्भावयेत् विज्ञाप्यैवंशिवंभक्त्याशांतिहोमंसमाचरेत् मधुनाज्ये
नदुग्धेनदूर्वाभिर्मूलमंत्रतः शतमष्टाधिकंमंत्रंप्रत्येकंजुहुयात्ततः मूलमंत्रमुच्चार्यैत्स्यर्थः त्रिभिश्चमधुरैःसार्धंसमिधोघोरमंत्रतः शां-
त्यर्थंवर्तुलेकुंडे सहस्रंजुहुयाद्गुरुः अथवास्त्रेणमंत्रेणजुहुयाद्यात्तटीस्ततः बभ्रीयात्कंकणंहैमंलिंगस्योत्तानकेकरे लिंगस्योत्तानकंकुरंमा
वयित्वातत्रहैमंकंकणंबध्नीयादित्यर्थः लिंगंसंस्नाप्यसंपूज्यपूर्वोक्तविधिनाततः सांगंसंपूजयेद्भक्त्यास्थंडिलेव्यापकेश्वरं लिंगाश्रितानि
भूतानिनाडयेदस्त्रमंत्रतः यानिकानिचभूतानिति छंत्याश्रित्यलिंगके त्यक्त्वाशिवाज्ञयातानिव्रजंतुस्थानमीप्सितं विद्याविद्येश्वरैर्युक्तःशिवो

लिंगे भविष्यति इति दत्वा शिवस्याज्ञां ततो भागत्रयं गुरुः हुत्वा हुत्वास्त्रमंत्रेण तथा पाशुपतास्त्रतः प्रतिभागं सहस्रं तु सिंचेच्छांतिमृदोदकैः
ब्रह्मशिलापिंडिलिंगात्मकदेवभागत्रयं संस्कर्तुं त्रिसहस्रमस्त्रेण हुत्वा तेनैव प्रतिभागं कलशसहस्रेणाभिषिंचेदित्यर्थः मूलमध्याग्रकेंद्रैर्मैः स्पृ-
ष्ट्वा जपमाचरेत् ब्रह्मशिलां मूलेन पिंडिं मध्येन लिंगमग्रेण दर्भैः स्पृष्ट्वेत्यर्थः प्राग्वत्पाशुपतास्त्रं च जपेद्धोमस्य संख्यया सद्योजातादिचक्रे
षु दद्यादर्घ्यं पराङ्मुखः दुष्टलिंगस्य निपातनमाह सोधं भूमौ परित्याज्यं दारुजं चाग्निना दहेत् सोधं स्फुधानिर्मितं लिंगं लोहजं तेन कार्यं स्याच्छैलजं-
वाप्सु निक्षिपेत् सुवर्णाद्यष्टलोहनिर्मितं भग्नं तेनैव सुवर्णादिना तत्कार्यमित्यर्थः तत्तत्तत्वेश्वरान् लिंगान् मूर्तिमूर्तीश्वरानपि लिंगस्यानुवि-
सृजेत् हृदंगमूर्तिस्थितानपि ततः सुवर्णपाशेन रज्ज्वा गोचर्मजातया वृषस्कंधस्थया बध्वा लिंगं पीठं च वर्मणा। शिवमस्त्वितितद्वाक्यं स-
ञ्जनो धारयन् गुरुः उद्धारार्थं च लिंगस्य ततो वृषो प्रेरयेत्ततः बहिर्नीत्वा ततो लिंगं पीठं ब्रह्मशिलावृषं रथादिकं समारोप्य समुद्रे निक्षिपेत्ततः
स्थूललिंगात्पृतो बद्धा गजं वा प्रेरयेद्गुरुः सोधं भूमौ परित्यज्य दारुजं चानले दहेत् सर्वं वा निक्षिपेत्तोये लिंगं वा प्रतिमादिकं ततः पाशुपतास्त्रे
ण शांत्यर्थं जुहुयाच्छतम् लोकपालादिभिस्तद्द्वा स्वशांत्ये शतशतम् प्रतिदेवतं शतं जुहुयादित्यर्थः रक्षां कुर्याच्च तद्धाम्नि महापाशुपता
स्त्रतः तत्मानं तन्मयं लिंगं तत्र संस्थापयेत्पुनः प्रतिष्ठोक्तेन मार्गेण सर्वकर्म समाचरेत् हैर्म्यस्य परिवाराणां प्राकारादेः समुत्पृतौ सर्वेषाम-
पि जीर्णानामयमेव विधिः स्मृतः कृत्वा च दक्षिणां दद्याद्गुर्वादिभ्यो यथोदिताम् यत्पुण्यं स्थापने प्रोक्तं तत्फलं एतदुत्पृतौ अयमत्र निर्गलितोर्थः ल-
क्ष्मोज्झितस्फुटितविशीर्णश्वपञ्चसेवितानां लिंगानां तादृशीनां बाहुपादशिरःकर्णनासास्यहीनानां विष्णुक्रमकारेण चालनं जलादौ प्रतिपादनं च हृ

त्वा नूतनप्रकारेणतस्मिन्नेवस्थानेपूर्वसजातीयद्रव्यनिर्मितंतन्मानंतदाकारंलिंगंतादृशींप्रतिमांवास्थापयेत् अतिजीर्णामिति पूर्वोक्तेःअथवा
क्यात् पीठंचचालितंलिंगमिति त्यजेत्सदोषितंलिंगमिति बाहुपादशिरोहीनामिति यद्व्यंगमप्रमाणमिति सिद्धांतशेखरोक्तेः अस्मादेववाक्य
नियमात्प्रतिपत्तिप्रयोजकदोषाभावाच्चन्युब्जनिम्नस्थविषमस्थदिङ्मूढानांचवैधचालनं तेषामेवपुनःस्थापनंच भग्नचूर्णयोस्तदपवादानां-
प्रतिपादनपूर्वकंनूतनानांस्थापनं अनेकशकलत्वेनचूर्णितत्वेनचउद्धारपुनःस्थापनविध्योरप्रवृत्तेः चालितचलितपातितपतितमध्यस्था
नांतुनोत्थापनत्यागः किंतुतेषामेवपुनःस्थापनं उद्धृतस्योत्थापनासंभवान्निर्दुष्टत्वेनप्रतिपत्तिविध्यप्रवृत्तेश्च एतेनैवनदीवेगोन्मत्तशत्रु
चोरहस्त्याद्यपहृतानांलाभेतान्येवपुनःस्थापनीयानि तेषामलाभे तादृशान्यन्यानिस्थाप्यानि निषिद्धस्पर्शदूषितनिषिद्धजलस्पृ
ष्टविप्रक्षालनजदूषितपतितादिचर्चितश्लेष्मविण्मूत्रादिदूषितानांस्वस्थानस्थितानामेवपुनःसंस्कारोनोद्धारोनापिप्रतिपत्तिःअतिजीर्णामि
तिपीठंचचालितमितित्यजेत्सदोषितंलिंगमितिपूर्वोक्तवाक्यनियमात् अद्भुतानामेवतत्रैवसंस्कारसंभवात् स्थलांतरनयनविध्यभा-
वाच्चलितस्याविकृतस्यचविधृतादेरप्येवमेव स्थानाच्चालितस्यतुपुनस्तत्रैवप्रतिष्ठास्थानांतरविधानाभावाच्चलितस्याविकृतस्यचत्या
गःतादृशस्यान्यस्यप्रतिष्ठा स्थूलपूर्वपिंडिब्रह्मशिलयोरप्युद्धारः प्रतिपत्तिविधिनापिंडिकांतरादिनिवेशश्च व्यंगेतुपूर्वपिंडिकादीनांप्रयु-
क्तएवमेव पिंडिकाद्यभावेतुपिंडिकाद्यंतरस्थापनमात्रमित्यादिषुदुष्टलिंगानामित्यग्निपुराणवाक्यात् लिंगेपीठादिकेवापीतिसिद्धांतशेखरो
क्तेः पूर्वापिपरित्यजेदितिहयशीर्षवाक्यात् सुवर्णादिनिर्मितभंगादौतुतेनैवसुवर्णादिनातादृशेनावत्परिमाणंचलिंगादिकृत्वातत्रैवपुनःस्थाप्यमितिचेद्वस्तु

वर्णादिना सादृशं कर्तुं न शक्यते तदा समुद्रे निक्षिपेत् रत्नजातु समुद्र एव क्षेमन्व्या रत्नजा यदि दग्धापि स्वकांतिं न जहाति तदा सैव स्थाप्येति त्रिविक्रमः लोहाद्यं छिन्नागमिति सिद्धांतशेखरवाक्यात् धातुजां रत्नजां वा पीतिहयशीर्षवाक्यात् इति जीर्णोद्धारविधिः अथास्य प्रयोगः यजमान उद्धार्यात् दक्षिणस्यामीशान्यां वा मश्चिमद्वारे कतोरणमंडपं तन्मध्यभागे वेदिं पूर्वभागे वर्तुलं चतुरस्रं वा पश्चिमे वास्तुपीठमुत्तरवालुकायाः स्थंडिलं च कृत्वा देशकालादि स्मृत्वा मोलफलाच्छतगुणफलकामोल्पप्रतिमायां तु दशगुणफलकामो वा जीर्णादि दोषदुष्टलिंगस्य प्रतिमाया वा उद्धारसुन्द्धूयणं करिष्ये इति संकल्पयेत् पिंडिकावृषगरुडप्रासादकलशेषु ईश्वरप्रीतिकाम इति विशेषः सर्वत्रेश्वरप्रीतिकामो वा ततो गणेशपूजा स्वस्तिवाचनं मातृकापूजनं नांदीश्राद्धं तानि नूतनप्रतिष्ठावत्कृत्वा तद्देवब्रह्माचार्यसदस्यान् द्वात्रिंशत्षोडश वाष्टौ चतुरो वाक्रुत्विजो द्वारपालांश्चाष्टौ चतुरो वा वृत्वा वस्त्रालंकारमधुपर्कादिभिस्तान्पूजयेत् अथाचार्यो मंडपपूजादि शिवकुंभपूजांतं कृत्वा वास्तुमंडपे महावेद्यां च देवतास्थापनं कृत्वा पीठादौ प्रणवेनासनपूजनं कृत्वा ओं व्यापकेश्वराय एह्येहि नमः ओं व्यापकेश्वराय हृदयाय नमः ओं व्यापकेश्वराय शिरसे स्वाहा ओं व्यापकेश्वराय शिखायै वषट् ओं व्यापकेश्वराय कवचाय हुं ओं व्यापकेश्वराय अस्त्राय फट् इति मंत्रैः शिवमर्चयेत् देवतांतरोद्धारे मूलमंत्रेणार्चयेत् ततोऽग्निं संस्थाप्य लिंगचालनार्थं लिंगमंत्रेणातिलाहुतिसहस्रं हुत्वा मंडलदेवताहोमं पूर्णाहुतिं च कृत्वा जीर्णं भग्नमिदं देव सर्वदोषावहं नृणां अस्योद्धारे कृते शांतिः शास्त्रेऽस्मिन्कथिता त्वया जीर्णोद्धारविधानं च नृपरा श्रुविवर्धनं तदत्राधिष्ठितं देवं प्रोद्धरामि तवाज्ञया देवस्य जीर्णदोषं श्रावयित्वा शिल्पिपुनः शिवं सांगं विसृज्य यजमानस्य सुवर्णकंकणं बद्ध्वा सो

घर्णरवनिर्घोषेणोत्थितरथमारोप्य तरुच्छायेपर्यंतदेशेवृक्षमूलेगाधनदीन्हृदेवा मदेवेतिक्षिपेत् प्रतिमांतुप्रणवेनक्षिपेत् दारुजंचेत्तदुत्तरेदहेत् रत्नजं लिंगंयदिभिन्नकांतिमज्जहृदेव भवतितदातद्वत्पूर्ववत्स्थापयेत् सुवर्णादिमयंतद्वत्सांगंकृत्वास्थापयेत् प्रासादेत्वयंविशेषः प्रासादमंत्रवत्तत्वङ्गनक्षुरि कयावासंयोज्य नूतनप्रासादसिद्धिपर्यंतंखड्गादिकमर्चयित्वा प्रासादेसिन्दूरखड्गादिमंत्रान्यथास्थानंप्रतिष्ठाकालेन्यस्ययजमानमभिषिंच्य ततोलिंगंप्रतिमांवातत्रैवविधिवत्स्थापयेत् ध्रुवाद्यौरित्यादिमंत्रान्पठित्वास्थिरीकृत्यबहुसंपूज्यप्रार्थयेत् ज्ञानतोज्ञानतोवापियथोक्तंनकृतंयदि तत् सर्वंपूर्णमेवास्तु त्वत्प्रसादान्महेश्वर कर्तूराज्ञः प्रजानांचशांतिर्भवतु सर्वदा अस्माकंशिल्पिनांचैवसुप्रीतोभवसर्वदेति ॥ इतिश्रीसेंगरवंशावतंसश्रीमहाराजाधिराजभगवंतदेवादिष्टमीमांसकशंकरभट्टात्मजनीलकंठविरचितेश्रीमद्भगवंतभास्करेप्रतिष्ठामयूखेऽष्टमः समाप्तः ॥

## ॥अथास्यानुक्रमणिकालिख्यते ॥

हेंपुस्तकमुंबईयेथें शके १७८६ रक्ताक्षीनामाब्देश्रावणकृष्णपक्ष ११ शनिवारीं कृष्णशास्त्रीगुर्जर याणीं आपल्याशिलायंत्रांतमुद्रितकेलेंअसे छै॥

छँः इतिप्रतिष्ठामयूखः समापितोयम् छँः